गणं द्विशाब्दिको यद्वत्तद्वत्कायस्तु तस्य हि । सूर्यतेजःप्रतीकाशःसोमशर्मा महामतिः ॥
पुष्प चापि शुशुभे देवी सुमना पुण्यमङ्गलैः । पुत्रपौत्रैर्महाभागा दानव्रतैश्च संयमैः ॥
तम तिभाति विशालाक्षी पुण्यैःपतिव्रतादिभिः । तारुण्येन समायुक्ता यथाषोडशवार्षिकी
दैवादमानौ महात्मानौ दम्पती चारुमङ्गलौ । हर्षेण च समायुक्तौ पुण्यात्मानौ महोदयौ
ति प्रंतयोस्तु वृत्तान्तं पुण्याचारसमन्वितम् । सुव्रतस्य प्रवक्ष्यामि व्रतचर्यां द्विजोत्तमाः
यथा तेन समाराध्य नारायणमनामयम् ॥ ६१ ॥

ति श्रीपाद्मपुराणेपञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे ऐन्द्रेसुमनोपाख्याने
सुव्रतोत्पत्तिर्नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः

### सुव्रताख्यानकथनम् ।

सूतउवाच ।

कदा व्यासदेवोऽसौ ब्रह्माणं जगतःपतिम् । सुव्रताख्यानकं सर्वंपप्रच्छातीवविस्मितः

व्यासउवाच ।

लोकात्मंल्लोकविन्यास देवदेव महाप्रभो । सुव्रतस्याथचरितं श्रोतुमिच्छामि साम्प्रतम्

ब्रह्मोवाच ।

पराशर्य महाभाग श्रूयतां पुण्यमुत्तमम् । सुव्रतस्य सुविप्रस्य तपश्चर्यासमन्वितम् ॥
सुव्रतोनाम मेधावी बाल्यादपि स चिन्तयन् । गर्भं नारायणंदेवं दृष्टवान्पुरुषोत्तमम् ॥
पूर्वकर्माभ्यासेन हरेर्ध्यानं गतस्तदा । शङ्खचक्रधरं देवं पद्मनाभं सुपुण्यदम् ॥ ५ ॥
गायते चिन्तयेत्सोहि गीतिज्ञाने प्रपाठने । एवं देवं हरिंध्यायन्सदैव द्विजसत्तमः ॥६॥
क्रीडत्येवं सदाडिम्भैःसार्द्धं च बालकोत्तमः । बालकानां स्वकंनाम हरेश्चैव महात्मनः
चकार स हि मेधावी पुण्यात्मा पुण्यवत्सलः ।

समाह्वयति वै मित्रं हरेर्नाम्ना महामतिः ॥ ८ ॥

भोभोःकेशव एह्येहि एहि माधव चक्रधृक् । क्रीडस्व च मयासार्धं त्वमेव पुरुषो
सममेवं प्रगन्तव्यमावाभ्यां मधुसूदन । एवमेव समाह्वानं नामभिश्च हरेर्द्विजः ।
क्रीडने पठने हास्ये शयने गीतप्रेक्षणे । याने च ह्यासने ध्याने मन्त्रे ज्ञाने सु
पश्यत्येवं वदत्येवं जगन्नाथं जनार्दनम् । स ध्यायते तमेकं हि विश्वनाथं महेश्व

तृणे काष्ठे च पाषाणे शुष्के सार्द्रे हि केशवम् ।
पश्यत्येवं स धर्मात्मा गोविन्दं कमलेक्षणम् ॥ १३ ॥

आकाशे भूमिमध्ये तु पर्वतेषु वनेषु च । जलेस्थले च पाषाणे जीवेष्वेव महा
नृसिंहं पश्यते विप्रः सुव्रतःसुमनासुतः । बालक्रीडां समासाद्य रमत्येवं द्विं
गीतैश्च गायते कृष्णं सुरागैर्मधुराक्षरैः । तालैर्लयसमायुक्तैःसुस्वरैर्मूर्च्छना

सुव्रत उवाच ।

ध्यायन्ति वेदविदुषःसततं मुरारिं यस्याङ्गमध्ये सकलं हि विश्वम् ।
योगेश्वरं सकलपापविनाशनं च पादं व्रजामि शरणं मधुसूदनस्य ॥
लोकेषु यो हि सकलेष्वनुवर्ततेऽथो लोकाश्च यत्रसततं निवसन्ति
दोषैर्विहीनमखिलैःपरमेश्वरं तं तस्यैव पादयुगलं सततं नमामि ॥ १
नारायणं गुणनिधानमनन्तवीर्यं वेदान्तशुद्धमतयःप्रपठन्ति नित्यम् ।
संसारसागरमनन्तमगाधदुर्गमुत्तारणार्थमखिलं शरणं प्रपद्ये ॥ १६ ॥
योगीन्द्रमानससरोवरराजहंसं शुद्धंप्रभावमखिलं सततं हि यस्य ।
तस्यैव पादयुगलं विमलंविशालं दीनस्य मेऽसुररिपो कुरु तस्य
ध्यायेऽखिलस्य भुवनं स्वपतिं च देवं दुःखान्धकारदलनार्थमिहैव
लोकस्य पालनकृते परिणीतधर्मं सत्यान्वितं सकललोकगुरुं सुरेशम्
गायाम्यहं सुरसगीतकतालमानैःश्रीरङ्गमेकमनिशं भुवनस्य देवम् ।
अज्ञाननाशकमलं च दिनेशतुल्यमानन्दकन्दमखिलंमहिमासमेतम् ॥
सन्मूर्च्छनामृतस्य कलानिधानं तं गीतकौशलमनन्यरसैःप्रगाये ।

शुक्लं स्वयोगकरणैःपरमार्थदृष्टिं विश्वं स पश्यति चराचरमेव नित्यम्॥२३॥
प्रश्यन्ति नैव यमिहाथ सुपापलोकास्तं केशवं शरणमेवमुपैति नित्यम् ॥
कराभ्यां वाद्यमानस्तु तालं तालसमन्वितम् ।
गीतेन गायते कृष्णं बालकैःसहमोदते ॥ २५ ॥
वं क्रीडारतोनित्यं बालभावेन वै तदा । सुव्रतःसुमनापुत्रो विष्णुध्यानपरायणः ॥
ोडमानं ग्राहमाता सुव्रतं चारुलक्षणम् । भोजनं कुरु मे वत्स क्षुधा त्वां परिपीडयेत्
सुवाच पुनःप्राज्ञःसुमनां मातरंपुनः । महामृतेनतृप्तोऽस्मि हरिध्यानरसेन वै ॥ २८ ॥
ाजनासनमारूढो मिष्टमन्नं प्रपश्यति । इदमन्नं स्वयंविष्णुरात्मा ह्यन्नं समाश्रितः ॥
ात्मरूपेण यो विष्णुरनेनान्नेन तृप्यतु । क्षीरसागरसंवासो यस्यैव परिसंस्थितः ॥
लेनानेन पुण्येन तृप्तिमायातु केशवः । ताम्बूलचन्दनैर्गन्धैरेभिः पुष्पैर्मनोहरैः ॥ ३१ ॥
ात्मस्वरूपेण तृप्तस्तृप्तिमाया तु केशवः । शयने याति धर्मात्मा तदाकृष्णं प्रचिन्तयेत्
ागनिद्रान्वितं कृष्णं तमहं शरणंगतः । भोजनाच्छादनेष्वेवमासने शयने द्विजः ॥३३॥
न्तयेद्वासुदेवं तं तस्मैसर्वं प्रकल्पयेत् । तारुण्यं प्राप्यधर्मात्मा कामभोगान्विहाय वै
युक्तःकेशवध्याने वैडूर्यपर्वतोत्तमे । यत्र सिद्धेश्वरं लिङ्गं वैष्णवं पापनाशनम् ॥३५॥
मोङ्कारसंज्ञं च ध्यात्वा चैव महेश्वरम् । ब्रह्मणावर्द्धितं देवं नर्मदा दक्षिणेतटे ॥३६॥
सिद्धेश्वरं समाश्रित्य तपोभावं व्यचिन्तयत् ॥ ३७ ॥
ति श्रीपाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे ऐन्द्रे सुमनोपाख्याने
एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः

### सुव्रतस्य पूर्वजन्मचरित्रवर्णनम् ।

व्यासउवाच ।



मेकं महाभाग करिष्ये साम्प्रतं वद । त्वयैव पूर्वमुक्तं हि सुव्रतं च प्रतीश्वरम् ॥१॥

पूर्वाभ्यासेन सन्ध्यायन्नारायणमनामयम्। कस्यां ज्ञात्यां समुत्पन्नः सुव्रतः पूर्व
तन्मे त्वं साम्प्रतं ब्रूहि कथमाराधितो हरिः। अनेनापि सद्देवेशकोऽयं पुण्यसम

ब्रह्मोवाच।

वैदिशे नगरे पुण्ये सर्वऋद्धिसमाकुले। तत्र राजा महातेजा ऋतध्वजसुतोब

तस्यात्मजो महाप्राज्ञो रुक्मभूषण विश्रुतः।

सन्ध्यावली तस्य भार्या धर्मपत्नी यशस्विनी ॥ ५ ॥

तस्यां पुत्रंसमुत्पाद्य स आत्मसदृशंततः। तस्य धर्माङ्गदं नाम चकार नृपनन्द
सर्वलक्षणसम्पन्नःपितृभक्तिपरायणः। रुक्माङ्गदस्य तनयो योऽयं भगवतांवरः
पितुःसौख्याययेनापि मोहिन्यै तु शिरोददे। वैष्णवेन च धर्मेण पितृभक्त्या तु

सुप्रसन्नो हृषीकेशःस कायो वैष्णवंपदम्।

नीतस्तु सर्वधर्मज्ञो वैष्णवःसात्वतांवरः।

धर्माङ्गदो महाप्राज्ञः प्रज्ञाज्ञानविशारदः। तत्रस्थो वै महाप्राज्ञो धर्मोऽसौ धर्म
दिव्यान्मनोऽनुगान्भोगान्मोदमानःप्रभुञ्जति। पूर्णेयुगसहस्रान्ते धर्मो वै धर्म
तस्मात्पदात्परिभ्रष्टो विष्णोश्चैव प्रसादतः। सुव्रतोनाम मेधावी सुमनानन्द
सोमशर्माख्यतनयः श्रेष्ठो भगवतांवरः। तपश्चचार मेधावी विष्णुध्यानपरोऽभ
कामक्रोधादिकान्दोषान्परित्यज्य द्विजोत्तमः। संयम्य चेन्द्रियंवर्गं तपस्तेपे दि
वैडूर्यपर्वतश्रेष्ठे सिद्धेश्वरस्य सन्निधौ। एकीकृत्य मनश्चायं संयोज्य विष्णुनासह
एवं वर्षशतंस्थित्वा ध्यानेनास्य महात्मनः। सुप्रसन्नो जगन्नाथःशङ्खचक्रगद
तस्मै वरं ददौचाथ सलक्ष्म्या सहकेशवः। भोभोःसुव्रतधर्मात्मन्बुध्यस्व विबु
वरं वरय भद्रं ते कृष्णोऽहं ते समागतः। एवमाकर्ण्यमेधावी विष्णोर्वाक्यमनु
हर्षेण महताविष्टो दृष्ट्वा देवं जनार्दनम्। बद्धाञ्जलिपुटो भूत्वा प्रणाममकर

सुव्रत उवाच।

संसारसागरमतीवमहासुदुःखजालोर्मिभिर्विविधमोहचयैस्तरङ्गैः।



सम्पूर्णमस्तिनिजदोषगुणैस्तु प्राप्तं तस्मात्समुद्धर जनार्दनमाऽऽशु

कर्माम्बुदे महति गर्जति वर्षतीव विद्युल्लतोल्लसति पातकसञ्चयैर्मे ।
मोहान्धकारपटलैर्मम नास्ति दृष्टिर्दीनस्य तस्य मधुसूदन देहि हस्तम् ॥२१॥
संसारकाननघनं बहुदुःखवृक्षैः संसेव्यमानमपि मोहमयैश्च सिंहैः ।
सन्दीप्तमस्ति करुणा बहुवह्नितेजःसन्तप्यमानमनिशं परिपाहि कृष्ण ॥२२॥
संसारवृक्षमतिजीर्णमपीह उच्चं मायासुकन्दकरुणा बहुदुःखशाखम् ।
जायादिसङ्गच्छदनं फलितं मुरारे तत्राधिरूढपतितं भगवन्हि रक्ष ॥ २३ ॥
दुःखानलैर्विविधमोहमयैः सुधूमैः शोकैर्वियोगमरणान्तिक सन्निभैश्च ।
दग्धोऽस्मि कृष्णसततं ममदेहि मोक्षं ज्ञानाम्बुदैःसमभिषिञ्च सदैव मां त्वम् ॥
घोरान्धकारपटले महतीवगर्ते संसारनाम्नि पतितं सततं हि कृष्ण ।
त्वं सत्कृपो मम हि दीनभयातुरस्य तस्माद्विरज्य शरणं तव आगतोऽस्मि
त्वामेव ये नियतमानसभावयुक्ता ध्यायन्ति ज्ञानमनसा पदवीं लभन्ते ।
नत्वैव पादयुगलं च महासुपुण्यं यद्देवकिन्नरगणाःपरिचिन्तयन्ति ॥२६ ॥
नान्यं वदामि न भजामि न चिन्तयामि त्वत्पादपद्मयुगलं सततं नमामि ।
कामं त्वमेव मम पूरय मेऽद्य कृष्ण दूरेण यातु मम पातकसञ्चयस्ते ॥२७॥
दासोऽस्मि देव तव किङ्करजन्मजन्म त्वत्पादपद्मयुगलं सततं स्मरामि ॥
दि कृष्ण प्रसन्नोऽसि देहिमे सुवरं प्रभो । मन्मातापितरौ कृष्ण सकायौ मन्दिरेनय
आत्मनश्च महादेव मया सह न संशयः ॥ २९ ॥

श्रीकृष्ण उवाच ।

एवं ते परमं कार्यं भविष्यति न संशयः ॥ ३० ॥

ब्रह्मोवाच

स्यतुष्टो हृषीकेशो भक्त्या तस्य प्रतोषितः । प्रयातौ वैष्णवंलोकं दाहप्रलयवर्जितौ ॥
व्रतेन समंतौ द्वौ सुमना सोमशर्मकौ । यावत्कल्पद्वयं प्राप्तं तावत्ससुव्रतो द्विजः ॥
भुजे बुभुजे दिव्याँ लोकांश्चैव महामते । देवकार्यार्थमत्रैव काश्यपस्य गृहं पुनः ॥३३॥
वतीर्णो महाप्राज्ञो वचनात्तस्य चक्रिणः । ऐन्द्रंपदं हि यो भुङ्क्ते विष्णोश्चैवप्रसादतः

वसुदत्तेति विख्यातःसर्वदेवैर्नमस्कृतः ।
ऐन्द्रं प्रद्रं हि यो भुङ्क्ते साम्प्रतं वासवो दिवि ॥ ३५ ॥
एतत्ते सर्वमाख्यातं सृष्टिसम्बन्धकारणम् । अन्यदेवं प्रवक्ष्यामि यदेव परिपृच्छ

व्यास उवाच ।

धर्माङ्गदो महाप्राज्ञो रुक्माङ्गदसुतोबली । आद्ये कृतयुगे जातःसृष्टिकाले स वास
तत्कथं देवदेवेश अन्योधर्माङ्गदो भुवि । अन्योरुक्माङ्गदो राजा किं चायं त्रिदश
एतन्मे संशयं जातं तद्भवान्वक्तुमर्हति ।

ब्रह्मोवाच ।

हन्त ते कथयिष्यामि सर्वसन्देहनाशनम् ॥ ३६ ॥
देवस्य लीलासृष्ट्यर्थे वर्तते द्विजसत्तम । यथावाराश्च पक्षाश्च मासाश्च ऋतवो
संवत्सराश्च मनवस्तथा यान्ति युगाःपुनः । पश्चात्कल्पःसमायाति व्रजाम्येवं जव
अहमेव महाप्राज्ञ मयि यान्ति चराचराः । पुनःसृजति योगात्मा पूर्ववद्विश्वमेव
पुनरहं पुनर्वेदाःपुनस्ते देवताद्विजाः । तथाभूपाश्च ते सर्वे स्वचरित्रसमाविलाः
प्रभवन्ति महाभाग विद्वांस्तत्र न मुह्यति । पूर्वकल्पे महाभागो यथारुक्माङ्गदो
तथा धर्माङ्गदश्चायं सञ्जातःख्यातिमान्द्विजः ।
रामादयो महाप्राज्ञा ययातिर्नहुषस्तथा ॥ ४५ ॥
मन्वादयो महात्मानःप्रभवन्ति लयन्ति च । ऐन्द्रंपदं प्रभुञ्जन्ति राजानो धर्मतत्
यथा धर्माङ्गदोवीरःप्रभुञ्जति महत्पदम् । एवं वेदाश्च देवाश्च पुराणाःस्मृतिपूर्व
एतत्तु सर्वमाख्यातं तवाग्रे द्विजसत्तम । चरितं सुव्रतस्याथ पुण्यं सुगतिदाय
अव्यक्तं तु महाभाग प्रब्रवीमि तवाग्रतः ॥ ४६ ॥
इति श्रीपाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे ऐन्द्रेसुव्रतोपा
नामद्वाविंशोऽध्यायः ॥ २२ ॥

# त्रयोविंशोऽध्यायः

## सृष्टिसंहारकारणवर्णनम् ।

ऋषय ऊचुः ।

चित्रेयं कथापुण्या धन्या यशोविधायिनी । सर्वपापहरा प्रोक्ता भवता वदतांवर ॥
ष्टिसम्बन्धमेतन्नस्तद्भवान्वक्तुमर्हति । पूर्वमेव यथासृष्टिर्विस्तरात्सूतनन्दन ॥ २ ॥

सूतउवाच ।

स्तरेण प्रवक्ष्यामि सृष्टिसंहाकारणम् । श्रुतमात्रेण यस्यापि नरःसर्वज्ञतां व्रजेत् ॥
रण्यकशिपुर्योहि तेन व्याप्तंजगत्त्रयम् । तपसाराध्य ब्रह्माणं वरंप्राप्तं सुदुर्लभम् ॥
स्माद्देवान्महाभागादमरत्वं तथैव च । देवाँल्लोकान्स संव्याप्य प्रभुत्वं स्वयमर्जितम्
तोदेवाःसगन्धर्वा मुनयोवेदपारगाः । नागाश्च किन्नराःसिद्धा यक्षाश्चैव तथापरे ॥
ह्माणं तु पुरस्कृत्य जग्मुर्नारायणं प्रभुम् । क्षीरसागरसंसुप्तं योगनिद्रां गतं प्रभुम् ॥
सम्बोध्य महास्तोत्रैर्देवाःप्राञ्जलयस्तथा । सम्बुद्धेसति देवेशे वृत्तं तस्य दुरात्मनः ॥
चचक्षुर्महाप्राज्ञ समाकर्ण्य जगत्पतिः । नृसिंहरूपमास्थाय हिरण्यकशिपुं न्यहन् ॥९॥
नर्वाराहरूपेण हिरण्याक्षो महाबलः । उद्धृता वसुधापुण्या असुरोघातितस्तदा ॥१०॥
न्यांश्च घातयामास दानवान्घोरदर्शनान् । एवं चैतेषु नष्टेषु दानवेषु महत्सुच ॥११॥
न्येषु तेषु नष्टेषु दितिपुत्रेषु वै तदा । पुनःस्थानेषु प्राप्तेषु देवेषु च महत्सु च ॥१२॥
ष्वेवंप्रवृत्तेषु सर्वेषु धर्मकर्मसु । सुस्थेषु सर्वलोकेषु सादितिर्दुःखपीडिता ॥१३॥
शोकेन सन्तप्ता हाहाभूता विचेतना । भर्तारं सूर्यसङ्काशं तपस्तेजःसमन्वितम् ॥१४॥
तारं च महात्मानं भर्तारं कश्यपं तदा । भक्त्या प्रणम्य विप्रेन्द्र तमुवाच महामतिम्
गवन्नष्टपुत्राहं कृता देवेन चक्रिणा । दैतेयादानवाःसर्वे देवैश्चैव निपातिताः ॥१६॥
शोकानलेनाहं सन्तप्ता मुनिसत्तम । ममानन्दकरंपुत्रं सर्वतेजोहरं विभो ॥ १७ ॥
सुबलं चारुसर्वाङ्गं देवराजसमप्रभम् ।

वुद्धिमन्तं सुसर्वज्ञं ज्ञातारं सर्वपण्डितम् ॥ १८ ॥
तपस्तेजःसमायुक्तं सबलं चारुलक्षणम्। ब्रह्मण्यं ज्ञानवेत्तारं देवब्राह्मणपूजक
जेतारं सर्वलोकानां ममानन्दकरं द्विज। सर्वलक्षणसम्पन्नं पुत्रं मे देहि त्वं
एवमाकर्ण्य वै तस्याःकश्यपो वाक्यमुत्तमम्।
कृपाविष्टमनास्तुष्टो दुःखितायाः द्विजोत्तम ॥ २१ ॥
तामुवाच महाभागःकृपणां दीनमानसाम्। तस्याःशिरसिसंन्यस्य स्वहस्तं भाव
भविष्यति महाभागे यादृशो वाञ्छितःसुतः।
एवमुक्त्वा जगामासौ मेरुं गिरिवरोत्तमम् ॥ २३ ॥
तपस्तेपे निरालम्बःसाधयन्परमव्रतः। एतस्मिन्नन्तरे सा तु दधार गर्भमुत्तम
सादितिःसर्वधर्मज्ञा चारुकर्मा मनस्विनी। शतवर्षप्रमाणं सा शुचिस्वान्ता
तया वै जनितःपुत्रो ब्रह्मतेजःसमन्वितः। अथ कश्यप आयातो हर्षेण महता
चकार नाममेधावी तस्यपुत्रस्य सत्तमः। बलमित्यब्रवीत्पुत्रं नामतःसदृशो
एवं नाम चकाराथ व्रतबन्धं चकार सः। प्राह पुत्र महाभाग ब्रह्मचर्यं प्रसाध

पुत्र उवाच।

एवमेवं करिष्यामि तव वाक्यं द्विजोत्तम। वेदस्याध्ययनं कुर्यां ब्रह्मचर्येण सत्त

सूत उवाच।

एवं वर्षशतंसाग्रं गतं तस्य तपस्यतः। मातुःसमक्षमायातस्तपस्तेजःसमन्वितः
तपोवीर्यमयंदिव्यं ब्रह्मचर्यंमहात्मनः। दितिःपश्यति पुत्रस्य हर्षेण महतान्विता
तमुवाच महात्मानं बलं पुत्रं तपस्विनम्। मेधाविनं महात्मानं प्रज्ञाज्ञानविशा
त्वयि जीवति मेधाविन्प्रजीवन्ति सुतामम। हिरण्यकशिप्वाद्यास्ते येहताश्चक्र
वैरं साधय मे वत्स जहि देवान्रणाङ्गणे। सा दनुस्तमुवाचेदं बलं पुत्रं महाबलम्
आदाविन्द्रं हि देवेन्द्रं द्रुतं सूदय पुत्रक। पश्चाद्देवा न्निपात्यन्तां ततो गरुडवा
तयोराकर्ण्य सा देवी अदितिःपतिदेवता। दुःखेन महताविष्टा पुत्रमिन्द्रमभा
दितिपुत्रो महाकायो वर्द्धते ब्रह्मतेजसा। देवानां हि वधार्थाय तपस्तेपे निरा

वं जानीहि देवेश यदि क्षेममिहेच्छसि । एवमाकर्ण्य तद्वाक्यं स मातुःपाकशासनः ॥
चिन्तामवाप दुःखेन महतीं देवराट् तदा । महाभयेन सन्त्रस्तश्चिन्तयामास वै ततः ॥
कथमेनं हनिष्यामि देवधर्मविदूषकम् । इति निश्चित्य देवेशो बलस्य निधनं प्रति ॥

एकदा हि बलःसोऽपि सन्ध्यार्थं सिन्धुमाश्रितः ।
कृष्णाजिनेन दिव्येन दण्डकाष्ठेन राजितः ॥ ४१ ॥

कमण्डलेनापि पुण्येन ब्रह्मचर्येण तेन सः । सागरस्योपकण्ठे तं सन्ध्यासनमुपागतम् ॥
जपमानं सुशान्तं तं ददृशे पाकशासनः । वज्रेण तेन दिव्येन ताडितो दितिनन्दनः ॥
बलं निपतितं दृष्ट्वा गतसत्वं गतं भुवि । हर्षेण महताविष्टो देवराण्मुमुदे तदा ॥
एवं निपात्य तं दैत्यं दितिनन्दनमेव च । राज्यं चकार धर्मात्मा सुखेन पाकशासनः ॥
इति श्रीपाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे बलदैत्यवधोनाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः

### वृत्रासुरोत्पादनवर्णनम् ।

सूत उवाच ।

तं श्रुत्वा दितिः पुत्रं सुबलं बलमेव च । रुदितं करुणं कृत्वा हाहाकष्टं भृशं मम ॥
एवं सुकरुणं कृत्वा बहुकालं तपस्विनी । सा गता कश्यपं कान्तं तमुवाच यशस्विनी
तव पुत्रो महापाप इन्द्रः सुरगणेश्वरः । सागरोपागतं दृष्ट्वा बलं मे ब्रह्मलक्षणम् ॥
वज्रेण घातयामास सन्ध्यामास्यन्तमेव हि । एवं श्रुत्वा ततः क्रुद्धो मरीचितनयस्तदा
क्रोधेन महताविष्टः प्रजज्वालेव वह्निना । अवलुच्य जटामेकां शुच्यग्नौ स द्विजोत्तमः
इन्द्रस्येव वधार्थाय पुत्रमुत्पादयाम्यहम् । तस्मात्कुण्डात्समुत्पन्नो हुताशनमुखादपि

कृष्णाञ्जनचयोपेतः पिङ्गाक्षो भीषणाकृतिः । दंष्ट्राकरालवक्त्रान्तो जगतो भयदायकः ॥

महाचर्मवैरिको घोरः खड्गचर्मधरस्तथा। सर्वाङ्गतेजसा दीप्तो महामेघोपमो बली।
उवाच कश्यपं विप्रमादेशो मम दीयताम्। कस्मादुत्पादितो विप्र भवता कारणं
तमहं साधयिष्यामि प्रसादात्तव सुव्रत ॥ १० ॥

कश्यप उवाच।

अस्या मनोरथं पुत्र पूरयस्व ममैव हि। आदित्याख्यं महाप्राज्ञ जहि इन्द्रं दुरात्म
निहते देवराजे हि ऐन्द्रं पदं प्रभुङ्क्ष्व च। एवं तेन समादिष्टः कश्यपेन मह
वृत्रस्तु उद्यमं चक्रे तस्येन्द्रस्यवधाय च। धनुर्वेदस्य चाभ्यासं स चक्रे पौरु
बलंवीर्यं तथा क्षात्रं तेजो धैर्यसमन्वितम्। दृष्ट्वा हि तस्यदैत्यस्यसहस्राक्षो
उपायश्चिन्तितस्तस्य वृत्रस्यापि दुरात्मनः। वधार्थं देवदेवेन समाहूय महामु
सप्तर्षीन्प्रेषयामास वृत्रं दैत्येश्वरं प्रति। भवन्तस्तत्र गच्छन्तु यत्र वृत्रः स ति
सन्धिं कुर्वन्तु वै तेन सार्द्धं मम मुनीश्वराः। एवं तेन समादिष्टा मुनयः सप्त ते
वृत्रासुरं ततः प्रोचुः सहस्राक्षप्रचालिताः। सख्यं कर्तुं प्रयच्छेत्स क्रियतां दैत्य
ऋषयः सप्त तत्त्वज्ञा ऊचुर्वृत्रं महाबलम्। सहस्राक्षो महाप्राज्ञो भवता सह स
मैत्रमिच्छति वै कर्तुं तत्कथं न करोषि किम्।
अर्धमैन्द्रं पदं वीर स त्वं भुङ्क्ष्व सुखेन वै ॥ २० ॥
वक्ति त्वामेवमिन्द्रोऽपि असुरा देवतास्तथा।
कुरु मैत्रीन्तु तैस्सर्वैर्वैरं चैव विसृज्य वै ॥ २१ ॥

वृत्र उवाच।

यदि सत्येन देवेन्द्रा मैत्रमिच्छति सत्तमः ॥ २२ ॥
सत्यमाश्रित्य चैवाहं करिष्ये नात्र संशयः। छद्म चैवं पुरस्कृत्य इन्द्रो द्रोहं सम
तदा किं क्रियते विप्रा इत्यर्थे प्रत्ययं हि किम्।
ऋषयस्त्विन्द्रमाचख्युरित्यर्थे प्रत्ययं वद। तन्नस्त्वं सत्यतां ब्रूहियदिसख्यमिह

इन्द्र उवाच।

यद्यसत्येनवर्तेऽहं भवद्भिःसहछद्मना। ब्रह्महत्यादिकैःपापैर्लिप्येऽहंनात्र संशयः ॥

वृत्रं दैत्यनाथं तं पुनरूचुर्महौजसः । ब्रह्महत्यादिकैःपापैर्लिप्येऽहं नात्र संशयः ॥२६॥
युवाच महाप्राज्ञ त्वामेवं स पुरन्दरः । एतेन प्रत्ययेनापि सख्यं कुरु महामते॥ २७ ॥

वृत्र उवाच ।

रतां शिष्टमार्गेण सत्येनानेन तस्य च । मैत्रमेवं करिष्यामि तेन सार्द्धं द्विजोत्तमाः ॥
तत्र इन्द्रस्य संस्थानं नीतो ब्राह्मणपुङ्गवैः । इन्द्रस्तमागतं दृष्ट्वा वृत्रं मित्रार्थमुद्यतः ॥
हासनात्समुत्थाय अर्घमादय सत्वरः । ददौ तस्मै सधर्मात्मा वृत्राय द्विजसत्तमाः
भुङ्क्ष्व महाप्राज्ञ ऐन्द्रमेतन्महत्पदम् । वर्तितव्यं सुखेनापि आवाभ्यां दैत्यसत्तम ॥

सूत उवाच ।

तं विश्वासयन्दैत्यं वृत्रं मैत्रेण वै तदा । गतेषु तेषु विप्रेषु स्वस्थानं द्विजसत्तमाः ॥
छिद्रं पश्यति दुष्टात्मा वृत्रस्यापि सदैव हि ।
सावधानत्वमिन्द्रोऽपि दिवारात्रौ प्रचिन्तयेत् ॥ ३३ ॥
स्यच्छिद्रं न पश्येत वृत्रस्यापि महात्मनः । उपायं चिन्तयामास तस्यैव वधहेतवे ॥
भा सम्प्रेषिता तेन मोहयस्व महासुरम् । येनकेनाप्युपायेन यथा हत्वा लभे सुखम्॥
था कुरुष्व कल्याणि संमोहाय सुरद्विषः । वनंपुण्यं महादिव्यं पुण्यपादपसेवितम् ॥
दुवृक्षफलोपेतं मृगपक्षिसमाकुलम् । विमानमन्दिरैर्दिव्यैःसर्वत्र परिशोभितम् ॥३७।
व्यगन्धर्वसङ्गीतं भ्रमराकुलितं सदा । कोकिलानांरुतैःपुण्यैःसर्वत्र मधुरायतैः ।३८।
खिसारङ्गनादैश्च सर्वत्र सुसमाकुलम् । दिव्यैस्तु चन्दनैर्वृक्षैःसर्वत्र समलङ्कृतम् ।
पीकुण्डतडागैश्च जलपूर्णैर्मनोहरैः । कमलैःशतपत्रैश्च पुष्पितैःसमलङ्कृतम् ॥ ४० ॥
गन्धर्वसंसिद्धैश्चारणैश्चैव किन्नरैः । मुनिभिःशुशुभे दिव्यैर्दिव्योद्यानवरेण च ।४१।
प्सरोगणसङ्कीर्णं नानाकौतुकमङ्गलैः । हेमप्रासादसम्बाधं दण्डच्छत्रैश्च चामरैः ॥
लशैश्च पताकाभिःसर्वत्र समलङ्कृतम् । वेदध्वनिसमाकीर्णं गीतध्वनिसमाकुलम् ॥
वं नन्दनमासाद्य सा रम्भा चारुहासिनी । अप्सरोभिःसमं तत्र क्रीडत्येवंविलासिनी
कदा तु स वृत्रो वै कालाकृष्टो गतोवनम् । कतिभिर्दानवैःसार्द्धं मुदया परयायुतः ॥
लक्ष्ये भ्रमते पार्श्वं तस्यैव च महात्मनः । देवराजोऽपि विप्रेन्द्रश्छिद्रान्वेषीद्विषांकिल

स हि वृत्रो महाप्राज्ञो विश्वस्तःसर्वकर्मसु । इन्द्रंमित्रंपरंजानन्भयं चक्रे न तस्य
भ्रममाणो वनं पश्येत्सर्वत्र परमंशुभम् । सुरम्यं कौतुकवनं वनितागणसङ्कुल
चन्दनस्यापि वृक्षस्य छायां शीतां सुपुण्यदाम् ।
समाश्रित्य विशालाक्षी रम्भा तत्र प्रदीव्यति ॥ ४६ ॥
सखीभिस्तु महाभागा दोलारूढा यशस्विनी । गायते सुस्वरंगीतं सर्वविश्व
तत्र वृत्रःसमायातःकामाकुलितमानसः । दोलारूढां समालोक्य रम्भां चारुसु
इति श्रीपाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे वृत्रव
नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः

### रम्भासक्तस्यवृत्रस्य रम्भाऽऽग्रहेणमधुपानम् ।

सूत उवाच ।

इयं हि का गायति चारुलोचना विलासभावैःपरिविश्वमेव ।
अतीवबाला शुशुभे मनोहरा सम्पूर्णभावैःपरिमोहयेज्जनम् ॥ १ ॥
दृष्ट्वा सरम्भां कमलायताक्षीं पीनस्तनीं चर्चितकुङ्कुमाङ्गीम् ।
पद्माननां कामगृहं ममैषा नो वा रतिश्चारु मनोहरेयम् ॥ २ ॥
सम्पूर्णभावां परिरूपयुक्तां कामाङ्गशीलामतिलीलभावाम् ।
पश्यामि चैनां च सुकाममोहितां यास्यामि पृच्छामि च का भवेत्सा
इतीव दैत्यःसुविचिन्तयान्वितःकामेन मुग्धो बहुकालनोदितः ।
स मातुरस्तत्र जगाम सत्वरमुवाच तां दीनमनाःसुलोचनाम् ॥ ४ ॥
कस्यासि वा सुन्दरि केन प्रेषिता किं नाम ते पुण्यतमं वदस्व मे ।
तवैव रूपेण महातितेजसा मुग्धोऽस्मि बाले मम पश्यतां व्रज ॥ ५ ॥

मुक्ता विशालाक्षी प्राहकामाकुलं प्रति । अहं रम्भा महाभाग क्रीडार्थं वनमुत्तमम् ।
ख्यो भिस्सहिता याता नन्दनं वनमुत्तमम् । त्वं तु को वा किमर्थंहि ममपार्श्वंसमागतः

वृत्र उवाच ।

तामभिधास्यामि योऽहं बाले समागतः । हुताशनात्समुत्पन्नःकश्यपस्य सुतःशुभे ।
ञाहं देवदेवस्य इन्द्रस्यापि वरानने । ऐन्द्रंपदं वरारोहे अर्धं मे भुक्तिमागतम् ॥ ६ ॥
वृत्रःकथं देवि मामिवं न तु विन्दसि । त्रैलोक्यवशमायातं यस्यैव वरवर्णिनि ।१०
ऽहं शरणमायातःकामाद्रक्ष वरानने । भजस्व मां विशालाक्षि कामेनाकुलितं प्रिये ॥

रम्भोवाच ।

रागाहं तवैवाद्य भविष्यामि न संशयः । यद्वदाम्यहं वीर तत्तत्कार्यं त्वयैव हि ।१२।
त्रमस्तु महाभागे तत्तत्सर्वं करोम्यहम् । एवं सम्भाषणं कृत्वा तया सह महाबलः ॥
स्मिन्वने महापुण्ये रेमे दानवसत्तमः । तस्यागीतेन नृत्येन हास्येन ललितेन च ।१४॥
तिमुग्धो महादैत्यः स तस्याःसुरतेन च । तमुवाच महाभागं दानवं सा वरानना ॥

सुरापानं कुरुष्वेह पिबस्व मधुमाधवीम् ।
तामुवाच विशालाक्षीं रम्भांशशिनिभाननाम् ॥ १६ ॥

त्रोऽहं ब्राह्मणस्यापि वेदवेदाङ्गपारगः । सुरापानं कथं भद्रे करिष्यामि विनिन्दितम्
या तु रम्भयादेव्या प्रीत्यादत्ता सुराहठात् । तस्या दाक्षिण्यभावेन सुरापानं कृतंतदा
तीवमुग्धःसुरया ज्ञानभ्रष्टो यदाऽभवत् । तदन्तरे सुरेन्द्रेण वज्रेण निहतस्तदा ॥ १६॥
हत्यादिकैःपापैःसलितो वृत्रहाततः । ब्राह्मणास्तु ततःप्रोचुरिन्द्रपापं कृतं त्वया ॥
स्मद्वाक्यात्तु विश्वस्तो वृत्रोनाम महाबलः । हतोविश्वासभावेन एवं पापं त्वयाकृतम्

इन्द्र उवाच ।

नकेनाप्युपायेन हन्तव्योऽरिःसदैव हि । देवब्राह्मणहन्ता च यज्ञधर्मस्य कण्टकः ॥
हतो दानवो दुष्टस्त्रैलोक्यापि नाशकः । तदर्थं कुपिता यूयमेतन्न्यायस्य लक्षणम् ॥
विचारश्चापि कर्त्तव्योभवद्भिर्द्विजसत्तमाः ।
प्रश्नात्कोपःप्रकर्त्तव्यो न्याय्यान्याय्यं विचिन्त्यताम् ॥ २४ ॥

एवं सम्बोधिता विप्रा इन्द्रेणापि महात्मना । ब्रह्मादिभिःसुरैःसर्वैर्बोधितास्तेव्यथं
जग्मुःस्वस्थानमेवं हि निहते धर्मकण्टके ॥ २६ ॥
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वृत्रासुरवधोनाम पञ्चविंशोऽध्यायः ॥

---

## षट्विंशोऽध्यायः

### इन्द्रेणवेषान्तरंविधाय दितिशुश्रूषाकरणम् ।

सूत उवाच ।

तं पुत्रं निहतं श्रुत्वा सा दितिर्दुःख पीडिता । पुत्रशोकेन तेनैव सन्दग्धा द्विज
पुनरूचे महात्मानं कश्यपं मुनिपुङ्गवम् । इन्द्रस्यापि सुदुष्टस्य वधार्थं द्विजसत्
ब्रह्मतेजोमयं तीव्रं दुःसहं सर्वदैवतैः । पुत्रैकं दीयतां कान्त सुप्रियाहं यदा वि

कश्यप उवाच ।

निहतौ वलवृत्रौ च ममपुत्रौ महाबलौ । अधमाश्रित्य देवेन इन्द्रेणापि दुरात्म
तस्यैव च वधार्थाय पुत्रमेकं ददाम्यहम् । वर्षाणां तु शतैकं त्वं शुचिर्भव यशस्
एवमुक्त्वा स योगीन्द्रो हस्तं शिरसि वै तदा ।
दत्त्वादित्या सहैवासौ गतोमेरुं तपोवनम् ॥ ६ ॥
तपस्तताप सा देवी तपोवन निवासिनी । शुचिष्मती सदाभूत्वा पुत्रार्थं द्वि
ततोदेवःसहस्राक्षो ज्ञात्वा उद्यममेव च । दित्याश्चैव महाभाग अन्तरप्रेक्षकोऽ
पञ्चविंशाब्दिको भूत्वा देवराड् दैवतोपमः । ब्राह्मणस्य च रूपेण तस्याश्चान्तिक
स तां प्रणम्य धर्मात्मा मातरं तपसान्विताम् ।
तयोक्तस्तु सहस्राक्षो भवान्को द्विजसत्तम ॥ १० ॥
तामुवाच सहस्राक्षःपुत्रोऽहं तवशोभने । ब्राह्मणो वेदविद्वांश्च धर्मं जानामि भामि

तपसस्तव साहाय्यं करिष्येनात्र संशयः । शुश्रूषति सतां देवीं मातरं तपसान्वि

मेन्द्रं सा न जानाति आगतं दुष्टकारिणम्। धर्मपुत्रं विजानाति शुश्रूषन्तं दिने दिने
ङ्गं संवाहयेद्देव्याःपादौ प्रक्षालयेत्ततः। पत्रंमूलंफलं तत्र वल्कलाजिनमेव च ॥१४॥
ददात्येवं सधर्मात्मा तस्यै दित्यै सदैव हि।
भक्त्या सन्तोषिता तस्य सन्तुष्टा तमभाषत ॥ १५ ॥
त्रेजाते महापुण्ये इन्द्रे च निहतेसति। कुरु राज्यं महाभाग पुत्रेण मम दैवकम् ॥
मस्तु महाभागे तै प्रसादाद्भविष्यति। तस्याश्चैवान्तरं प्रेप्सुरभवत्पाकशासनः ॥
र्गवर्षशते चास्या ददर्शान्तरमच्युतः। अकृत्वा पादयोःशोचं दितिः शयनमाविशत् ॥
ध्यान्ते साशिरःकृत्वामुक्तकेशातिविह्वला। निद्रामाहारयामास तस्याःकुक्षिं प्रविश्यह
त्रपाणिस्ततो गर्भं सप्तधा तं न्यकृन्तत। वज्रेण तीक्ष्णधारेण रुरोद उदरेस्थितः ॥
गर्भस्तत्र विप्रेन्द्रा इन्द्रहस्त गतेन वै। रोदमानं महागर्भं तमुवाच पुनःपुनः ॥ २१ ॥
तक्रतुर्महातेजा मारोदीरित्य भाषत। सप्तधा कृतवाञ्छेक्रस्तंगर्भं दितिजं पुनः ॥२२॥
कैकं सप्तधाच्छित्त्वा रुदमानं स देवराट्। एवं वै मरुतोजातास्ते तु देवामहौजसः ॥
था इन्द्रेण ते प्रोक्ता बभूवुर्नामभिस्ततः। अतिवीर्य महाकायास्तीव्रतेजःपराक्रमाः ॥
कोनावैबभूवुस्ते पञ्चाशन्मरुतस्ततः। मरुतोनाम ते ख्याता इन्द्रमेव समाश्रिताः ॥
नानामेव सर्वेषां रोचयन्ति गणंमहत्। निकायेषु निकायेषु हरिःप्रादात्प्रजापतिः ॥
मशस्तानि राज्यानि पृथुपूर्वाणि तानि वै। सदेवःपुरुषःकृष्णःसर्वव्यापी जगद्गुरुः
रोजिष्णुर्महातेजाः सर्वएकःप्रजापतिः। पर्जन्यःपावकःपुण्यःसर्वात्मा सर्वएव हि ॥
यसर्वमिदं पुण्यं जगत्स्थावर जङ्गमम्। भूतसर्गमिमं सम्यग्जानतो द्विजसत्तम ॥
वृत्तिभयमस्तीह परलोकभयं कुतः। इमां सृष्टिं महापुण्यां सर्वपापहरां शुभाम् ॥
यःशृणोति नरो भक्त्या सर्वपापैः प्रमुच्यते।
स हि धन्यश्च पुण्यश्च स हि सत्यसमन्वितः ॥ ३१ ॥
यःशृणोति इमां सृष्टिं स याति परमांगतिम्।
सर्वपाप विशुद्धात्मा विष्णुलोकं स गच्छति ॥ ३२ ॥

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे मरुदुत्पत्तिर्नाम षड्विंशोऽध्यायः ॥ २६ ॥

# सप्तविंशोऽध्यायः

## पृथुना सर्ववर्णेषु राज्यासने राजवर्गस्थापनम् ।

सूत उवाच ।

सप्रभुःसर्वलोकेशो ह्यभिषिच्य ततो नृपम् । पृथुं वेनस्य तनयं सर्वराज्ये महाप्रभु
महाबाहु महाकायं यथेन्द्रं च सुरेश्वरम् । क्रमेणापि ततो ब्रह्मा राज्यानि च क्रि
यद्यस्यापि भवेद्योग्यं दातुं तदुपचक्रमे । वृक्षाणां ब्राह्मणानां च ग्रहर्क्षाणां तथै

सोमं राज्ये सोऽभ्यषिञ्चत्तपसा च महामतिः ।
धर्माणां धर्मयज्ञानां पुण्यानां पुण्यतेजसाम् ॥ ४ ॥

अपांमध्ये तथा देवं तीर्थानां हि तथैव च । वरुणं सोऽभिषिच्यैव रत्नानां च
अन्येषां सर्वयक्षाणां राज्ये वैश्रवणं पुनः । विष्णुमेव महाप्राज्ञमादित्यानां पित
राज्ये संस्थापयामास जनता हितहेतवे । सर्वेषामेव पुण्यानां दक्षमेव प्रजापति
समर्थं सर्वधर्मज्ञं प्रजापति गणेश्वरम् । प्रह्लादं सर्वधर्मज्ञं स हि राज्येन्यरूपयत

दैत्यानां दानवानां च विष्णुतेजःसमन्वितम् ।
यमंवैवस्वतं धर्मं पैत्र्येराज्येऽभिषिच्य च ॥ ६ ॥
यक्षराक्षसभूतानां पिशाचोरगसर्पिणाम् ।
योगिनीनां च सर्वासां वैतालानां महात्मनाम् ॥ १० ॥
कङ्कालानां हि सर्वेषां कूष्माण्डानां तथैव च ।
पार्थिवानां च सर्वेषां गिरिशं शूलपाणिनम् ॥ ११ ॥

पर्वतानां हि सर्वेषां हिमवन्तं महागिरिम् । नदीनां च तडागानां वापिकानां
कुण्डानां कूपराज्ये हि दिव्येषु च सुरेश्वरः । सागरं स्थापितं पुण्यं सर्वतीर्थमयं
गन्धर्वाणां तु सर्वेषां राज्येपुण्ये तथैव च । चित्ररथं ततो ब्रह्मा अभिषिच्य सुरं



नागानां पुण्यवीर्याणां वासुकिं च चतुर्मुखः ।

सर्पाणां तु तथा राज्ये अभिषिच्य स तक्षकम् ॥ १५ ॥

रणानां ततोराज्ये ऐरावणमसिञ्चत । अश्वानांचैव सर्वेषामुच्चैःश्रवसमेव च ॥

क्षिणांचैव सर्वेषां वैनतेयमथापिं सः । मृगाणां च ततोराज्ये ब्रह्मा सिंहमथादिशत्

वृषं तु गवांमध्ये अभिषिच्य प्रजापतिः । वनस्पतीनां सर्वेषां प्लक्षमेव पितामहः ॥

एवं राज्यानि सर्वाणि संस्थाप्य च पितामहः ।

दिशापालांस्ततो ब्रह्मा स्थापयामास सत्तमः ॥ १६ ॥

राजस्य तथापुत्रं पूर्वस्या दिशिसत्तमः । सुधन्वानं दिशःपालं राजानं सोऽभ्यषिञ्चत

क्षिणस्यां महात्मानं कर्दमस्य प्रजापतेः । पुत्रं शङ्खपदंनाम राजानं सोऽभ्यषिञ्चत ॥

श्चिमायां तथा ब्रह्मा वरुणस्य प्रजापतेः । पुत्रं च पुष्करंनाम सोऽभ्यषिञ्चत्प्रजापतिः

तरस्यां दिशि ब्रह्मा नलकूबरमेव च । एवं चैवाभ्यषिञ्चच्च दिक्पालान्स महौजसः ॥

रियं पृथिवीसर्वा सप्तद्वीपा सपत्तना । यथा प्रदेशमद्यापि धर्मेण प्रतिपाल्यते ॥२४॥

पृथुश्चैवं महाभागः सोऽभिषिक्तो नराधिपः ।

राजसूयादिभिः सर्वैरभिषिक्तो महामखैः ॥ २५ ॥

धिना वेदद्रष्टेन राजराज्ये महीपतिः । चाक्षुषेनाम्नि सम्पुण्ये अतीते च महौजसि

वन्तरे महाभाग देवपुण्यहितैषिणि । ततो वैवस्वतायैव मनवे राज्यमादिशत् ॥

स्तरं चापिव्याख्यास्ये पृथोश्चैव महात्मनः । यदि मामेव विप्रेन्द्रशुश्रूषसिअतन्द्रितः

दिवमधिष्ठानं महत्पुण्यं प्रकीर्तितम् । सर्वेष्वेव पुराणेषु एतद्धि निश्चितं सदा ॥

यंयशस्यमायुष्यं स्वर्गवासकरं शुभम् । धन्यं पवित्रमायुष्यं पुत्रदं वृद्धिदायकम्

श्रृणोति नरोभक्त्या भावध्यानसमन्वितः । अश्वमेधफलं तस्य जायते नात्रसंशयः

इति श्रीपाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे राज्याभिषेको

नाम सप्तविंशोऽध्यायः ॥ २७ ॥

———

# अष्टात्रिंशोऽध्यायः

## पृथुचरित्रवर्णनम्

ऋषयऊचुः ।

विस्तरेण समाख्याहि जन्म तस्य महात्मनः । पृथोश्चैव महाभाग श्रोतुकामा वयम्
राज्ञा तेन यथादुग्धा इयं धात्री महात्मना । पुनर्देवैश्च पितृभिर्मुनिभिस्तत्त्ववे
यथा दैत्यैश्च नागैश्च यथायक्षैर्यथा द्रुमैः । शैलैश्चैव पिशाचैश्च गन्धर्वैःपुण्य
ब्राह्मणैश्च तथासिद्धै राक्षसैर्भीमविक्रमैः । पूर्वमेव यथादुग्धा अन्यैश्च सुम

तेषामेव हि सर्वेषां विशेषं पात्र धारणम् ।

क्षीरस्यापि विधिं ब्रूहि विशेषं च महामते ॥ ५ ॥

वेनस्यापि नृपस्यैव पाणिरेव महात्मनः । ऋषिभिर्मथितःपूर्वं स कस्मादिह
क्रुद्धैश्चैत्र महापुण्यैःसूतपुत्र वदस्वनः । विचित्रेयं कथापुण्या सर्वपापप्रणा

श्रोतुकामा महाभाग तृप्तिर्नैव प्रजायते ॥ ८ ॥

सूत उवाच ।

वैन्यस्य हि पृथोश्चैव तस्य विस्तरमेव च । जन्मवीर्यं तथाक्षेत्रं पौरुषं द्वि
प्रवक्ष्यामि यथा सर्वं चरितंतस्य धीमतः । शुश्रूषध्वं महाभागा मामेवं द्विजस
अभक्ताय न वक्तव्यमश्रद्धाय शठाय च । सुमूर्खाय सुमोहाय कुशिष्याय त
श्रद्धाहीनाय कूटाय सर्वनाशाय मा द्विजाः । अन्यथा पठते यो हि नित्यं व
भवन्तो भावसंयुक्ताःसत्यधर्मपरायणाः । भवतामग्रतःसर्वं चरित्रं पापन
सम्प्रवक्ष्याम्यशेषेण शृणुध्वं द्विजसत्तमाः । स्वर्ग्यंयशस्यमायुष्यंधन्यंवेदैश्च
रहस्यमृषिभिःप्रोक्तं प्रवक्ष्यामिद्विजोत्तमाः । यश्चैनं कीर्तयेन्नित्यं पृथोर्वैन्यस्य
ब्राह्मणेभ्यो नमस्कृत्य न स शोचेत्कृताकृतम् । सप्तजन्मार्जितं पापं श्रुतमात्रेण



ब्राह्मणोवेदविद्वांश्च क्षत्रियो विजयी भवेत् ।

वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १७ ॥

फलं समाप्नोति पठनाच्छ्रवणादपि । पृथोर्जन्मचरित्रं च पवित्रंपापनाशनम् ॥१८॥
गोप्ता महाप्राज्ञो वेदशास्त्रार्थकोविदः । अत्रिवंश समुत्पन्नःपूर्वमत्रिसमःप्रभुः ॥
ष्टा सर्वस्य धर्मस्य अङ्गोनाम प्रजापतिः । य आसीत्तस्य पुत्रोवैवेनोनाम प्रजापतिः
र्ममेवं परित्यज्य सर्वदैव प्रवर्त्तते । मृत्योःकन्या महाभागा सुनीथा नाम नामतः ॥
तु अङ्गो महाभागःसुनीथामुपयेमिवान् । तस्यामुत्पादयामास वेनं धर्मप्रणाशनम् ॥
तामहस्य दोषेण वेनःकालात्मजात्मजः । निजधर्मपरित्यज्य अधर्मनिरतोऽभवत् ॥
मात्लोभान्महामोहात्पापमेव समाचरत् । वेदाचारमयं धर्मं परित्यज्य नराधिपः ॥
प्रवर्तत पापेन मदमत्सरमोहितः । वेदाध्यायं विना लोके प्रावर्तन्त तदा जनाः ॥

निःस्वाधायवषट्काराःप्रजास्तस्मिन्प्रजापतौ ।
प्रवृत्तं न पपुःसोमं हुतं यज्ञेषुदेवताः ॥ २६ ॥

युवाच सदुष्टात्मा ब्राह्मणान्प्रतिनित्यशः । नाध्येतव्यं न होतव्यं न देयं दानमेव च
यष्टव्यं न होतव्यमिति तस्यप्रजापतेः । आसीत्प्रतिज्ञाक्रूरेयं विनाशे प्रत्युपस्थिते
इमिज्यश्च यष्टा च यज्ञश्चेति पुनःपुनः । मयियज्ञा विधातव्या मयिहोतव्यमित्यपि
यब्रवीत्सदावेनोह्यहं विष्णुःसनातनः । अहंब्रह्मा अहंरुद्रो मित्रइन्द्रः सदागतिः ॥
मेव प्रभोक्ता च हव्यं कव्यं न संशयः । अथ ते मुनयःक्रुद्धा वेनंप्रतिमहाबलाः

ऊचुस्ते सङ्गताः सर्वे राजानं पापचेतनम् ॥ ३१ ॥

ऋषयः ऊचु ।

नाहि पृथिवीनाथःप्रजां पालयते सदा । धर्ममूर्तिःसराजेन्द्रतस्माद्धर्मं हि रक्षयेत् ॥
दीक्षां प्रवेक्ष्यामो यज्ञेद्वादशवार्षिकीम् । अधर्मं कुरु मायागे नैषधर्मःसतांगतिः ॥
धर्मं महाराज सत्यं पुण्यं समाचर । राजाहं पालयिष्यामि इति ते समयः कृतः ॥
स्तथा ब्रुवतःसर्वान्महर्षीनब्रवीत्तदा । वेनःप्रहस्य दुर्बुद्धिरिममर्थमनर्थकम् ॥३५॥

वेन उवाच ।

ष्टा धर्मस्य कश्चान्यःश्रोतव्यं कस्य वामया । श्रुतवीर्यतपःसत्यैर्मयावाकःसमोभुवि

प्रभवं सर्वभूतानां धर्माणां च विशेषतः । सम्मूढा न विदुर्नूनं भवन्तो मांविचे
इच्छन्दहेयं पृथिवीं प्लावयेयं जलैस्तथा । द्यां भुवं चैवरुन्धेयं नात्रकार्या विचार
यदा न शक्यते मोहादवलेपाच्च पार्थिवः । अपनेतुं तदा वेनं ततःक्रुद्धा महर्षयः
विस्फुरन्तं तदात्रेनं बलाद्गृह्यततो रुषा । वेनस्य तस्य सव्योरुं ममन्थुर्जात मनु
कृष्णाञ्जनचयोपेतमतिह्रस्वं विलक्षणम् । दीर्घास्यं च विरूपाक्षं नीलकञ्चुकवर्च
लम्बोदरं व्यूढकर्णमतिभीतं दुरोदरम् । ददृशुस्ते महात्मानो निषीदेत्यब्रुवंस्त
तेषांतद्वचनं श्रुत्वा निषसादभयातुरः । पर्वतेषु वनेष्वेव तस्यवंशःप्रतिष्ठितः ।

निषादाश्च किराताश्च भिल्लानाहलकास्तथा ।
भ्रमराश्च पुलिन्दाश्च ये चान्ये म्लेच्छजातयः ॥ ४४॥

पापाचारास्तुते सर्वे तस्मादङ्गात्प्रजज्ञिरे । अथ ते ऋषयःसर्वे प्रसन्नमनस
गतकल्मषमेवं तं जातं वेनं नृपोत्तमम् । ममन्थुर्दक्षिणं पाणिं तस्यैव च महा
मथितेतस्यपाणौ तु सञ्जातं स्वेदमेवहि । पुनर्ममन्थुस्ते विप्रादक्षिणं पाणिमे
सुकरात्पुरुषोजज्ञे द्वादशादित्य सन्निभः । तप्तकाञ्चनवर्णाङ्गोदिव्यमाल्या
दिव्याभरणशोभाङ्गो दिव्यगन्धानुलेपनः । मुकुटेनार्कवर्णेन कुण्डलाभ्यां वि
महाकायो महाबाहू रूपेणाप्रतिमो भुवि । खड्ग बाणधरो धन्वी कवची च
सर्वलक्षणसम्पन्नःसर्वालङ्कारभूषणः । तेजसा रूपभावेन सुवर्णैश्च महामतिः ।
दिवीन्द्रो यथाभाति भुवि वेनात्मजस्तथा । तस्मिञ्जातेमहाभागे देवाश्चऋषय
उत्सवं चक्रिरे सर्वे वेनस्य तनयं प्रति । दीप्यमानःस्ववपुषा साक्षादग्निरिवा
आद्यमाजगवंनाम धनुर्गृह्य महावरम् । शरान्दिव्यांश्च रक्षार्थे कवचं च मह
जातेसति महाभागे पृथौ वीरे महात्मनि । सम्प्रहृष्टानि भूतानि समस्तानि द्वि
सर्वतीर्थानितोयानि पुण्यानि विविधानि च । तस्याभिषेके विप्रेन्द्राःसर्वएवा

पितामहाद्या देवास्तु भूतानि विविधानि च ।
स्थावराणि चराण्येव अभ्यषिञ्चन्नराधिपम् ॥ ५७ ॥

महावीरं प्रजापालं पृथुमेव द्विजोत्तम । पृथुर्वैन्यो [illegible] अभिगम्य वरा

र्विप्रैस्तथा सर्वैरभिषिक्तो महामनाः । राज्ञां समधिराज्ये वै पृथुर्वैन्यः प्रतापवान् ॥
स्य पित्राप्रजाःसर्वाःकदानैवानुरञ्जताः । तेनानुरञ्जिताः सर्वा मुमुदिरे सुखेन वै ॥
स्यानुरागाद्धीरस्य नामराजेत्यजायत । प्रयातस्य सुवीरस्य समुद्रस्य द्विजोत्तम ॥
पस्तस्तम्भिरे सर्वा भयात्तस्य महात्मनः । दुर्गं मार्गं विलोप्यैव सुमार्गं पर्वताददुः
ज्ञा भङ्गं न चक्रुस्ते गिरयःसर्वएव ते । अकृष्टपच्या पृथिवी सर्वत्र कामधेनवः ॥

पर्जन्यःकामवर्षी च वेदयज्ञान्महोत्सवान् ।
कुर्वन्ति ब्राह्मणाःसर्वे क्षत्रियाश्च तथापरे ॥ ६४ ॥

र्वकामफलावृक्षास्तस्मिञ्छासतिपार्थिवे । नदुर्भिक्षं न च व्याधिर्नाकालमरणंनृणाम्
र्वे सुखेन जीवन्ति लोका धर्मपरायणाः । तस्मिञ्छासति दुर्धर्षे राजराजे महात्मनि
स्मिन्नेव कालेतु यज्ञे पैतामहे शुभे । सूतः सूत्यांसमुत्पन्नःसौम्येऽहनि महामतिः ॥
स्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः । पृथोःस्तवार्थं तौ तत्र समाहूतोमहर्षिभिः
तस्य लक्षणं वक्ष्ये महापुण्यं द्विजोत्तमाः । शिखा सूत्रेणसंयुक्तो वेदाध्ययनतत्परः
र्वशास्त्रार्थवेत्ताऽसावग्निहोत्रमुपासिता । दानाध्ययनसम्पन्नो ब्रह्माचारपरायणः ॥

देवानां ब्राह्मणानां च पूजनाभिरतःसदा ।
याचकःस्तावकैःपुण्यैर्वेदमन्त्रैर्यजेत्किल ॥ ७१ ॥

दाचारपरोनित्यं सम्बन्धो ब्राह्मणैःसह । एवं स मागधोजज्ञे वेदाध्ययनवर्जितः ॥
न्दिनश्चारणाःसर्वे ब्रह्माचार विवर्जिताः । ज्ञेयास्ते च महाभागाःस्तावकाःप्रभवन्तिते
वनार्थमुभौसृष्टौ निपुणौ सूतमागधौ । तावूचुरृषयःसर्वेस्तूयतामेष पार्थिवः ॥
मैतदनुरूपं च यादृशोऽयं नराधिपः । तावूचतुस्तदा सर्वान्स्तानृषीन्बन्दिमागधौ ॥
वां देवानृषींश्चैव प्रीणयावःस्वकर्मभि । न चास्यविद्धो वै कर्म न तथा लक्षणंयशः

कर्मणा येन कुर्यावः स्तोत्रमस्य महात्मनः ।
जानीवस्तन्न विप्रेन्द्रा अविज्ञातगुणस्य हि ॥ ७७ ॥

विष्यैस्तैर्गुणैःपुण्यैःस्तोतव्योऽयं नरोत्तमः । कृतवान्यानिकर्माणि पृथुरेव महायशाः
चुस्तेमुनयःसर्वेगुणान्दिव्यान्महात्मनः । सत्यवाञ्ज्ञानसम्पन्नो बुद्धिमान्ख्यातविक्रमः

सदाशूरोगुणग्राही पुण्यवांस्त्यागवान्गुणी । धार्मिकःसत्यवादीच यज्ञानांयाज
प्रियवाक्सत्यवादीच धान्यवान्धनवान्गुणी । गुणज्ञःसगुणग्राही धर्मज्ञःसत्
सर्वगःसर्ववेत्ता च ब्रह्मण्यो वेदवित्सुधीः । प्रज्ञावान्सुस्वरश्चैव वेदवेदाङ्गपार
धातागोप्ता प्रजानां सविजयी समराङ्गणे । राजसूयादिकानां तु यज्ञानां राज
आहर्ता भूतलेचैकःसर्वधर्मसमन्वितः । एतेगुणा अस्यचाग्रे भविष्यन्ति मह

ऋषिभिस्तौ नियुक्तौ तु कुर्वाणौ सूतमागधौ ।
गुणैश्चैव भविष्यैश्च स्तोत्रं तस्य महात्मनः ॥ ८५ ॥

तदाप्रभृति वै लोकाः स्तवैस्तुष्टा महामते । पुरतश्च भविष्यन्ति दातारःस्ता
ततःप्रभृतिलोकेऽस्मिन्स्तवेषु द्विजसत्तमाः । आशीर्वादाःप्रयुज्यन्ते तेषां द्रवि

सूताय मागधायैव बन्दिने च महोदयम् ।
चारणाय ततःप्रादात्कलिङ्गं देशमुत्तमम् ॥ ८८ ॥

पृथुःप्रसादाद्धर्मात्मा हैहयं देशमेव च । रेवातीरे पुरं कृत्वा स्वनाम्ना नृपनन्द
ब्राह्मणेभ्यो द्विजश्रेष्ठ यजन्दाता पृथुःपुरा । सर्वज्ञं सर्वदातारं धर्मवीर्यं नर

तं ददृशुःप्रजाःसर्वा मुनयश्च तपोऽमलाः ।
ऊचुःपरस्परं पुण्या एष राजा महामतिः ॥ ९१ ॥

देवादीनांवृत्तिदाता अस्माकं च विशेषतः । प्रजानां पालकश्चैव वृत्तिदो हि भ
इयंधात्रीमहाप्राज्ञा उप्तंबीजंपुराकिल । जीवनार्थंप्रजाभिस्तु ग्रासयित्वा स्थि

ततःपृथुं द्विजश्रेष्ठ प्रजासमभिदुद्रुवुः ।
विधत्स्वेति सुवृत्तिं नो मुनीनां वचनं तदा ॥ ९४ ॥

ग्रासयित्वातदान्नानि पृथ्वीजातासुनिश्चला । भयंप्रजानां सुमहत्सदृष्ट्वाथ
महर्षिवचनात्सोऽपि प्रगृह्य सशरंधनुः । अभ्यधावतवेगेन पृथ्वीं क्रुद्धो नरा

कौञ्जरं रूपमास्थाय भयात्तस्य तु मेदिनी ।

वनेषु दुर्गदेशेषु गुप्ता भूत्वा चचार सा ॥ ९७ ॥

.न पश्यति महाप्राज्ञःकुरूपं द्विजसत्तमाः । आचचक्षुर्महाप्राज्ञं कुञ्जररूपमास्थित

ः कुञ्जररूपां तामभिदुद्राव पार्थिवः । ताड्यमाना च सा तेन निशितैर्मार्गणैस्ततः ॥
रिरूपं समास्थाय पलायनपराऽभवत् । हरेरूपं समास्थाय अभिदुद्राव पार्थिवः ॥
सोऽतिक्रुद्धो महाप्राज्ञो रोषारुणसुलोचनः ।
सुबाणैर्निशितैस्तीक्ष्णैराजघान स मेदिनीम् ॥ १०१ ॥
कुलव्याकुलाजाता बाणाघातहता तदा । माहिषंरूपमास्थाय पलायनपराऽभवत् ॥
भ्यधावतद्वेगेन बाणपाणिधनुर्धरः । सा गौर्भूत्वा द्विजश्रेष्ठाःस्वर्गमेव गताध्रुवम् ॥
ह्मणःशरणंप्राप्ताविष्णोश्चैव महात्मनः । रुद्रादीनां च देवानां त्राणस्थानं न विन्दति
लभन्ती भृशंत्राणं वैन्यमेवान्वविन्दत । तस्यपार्श्वं पुनःप्राप्ता बाणघातसमाकुला ॥
बद्धाञ्जलिपुटा भूत्वा तं पृथुं वाक्यमब्रवीत् ।
त्राहि त्राहीति राजेन्द्र सा राजानमभाषत ॥ १०६ ॥
हंधात्री महाभाग सर्वाधारा वसुन्धरा । निहतायां मयिनृप निहतं लोकसप्तकम् ॥
कृताञ्जलिपुटाभूत्वा पूज्या लोकैस्त्रिभिःसदा ॥
उवाच चैनं राजानमवध्यास्त्री सदा नृप ॥ १०८ ॥
णिणांवधे महत्पातं दृष्टमस्ति द्विजोत्तमैः । गवांवधे महत्पापं दृष्टमस्ति द्विजोत्तमैः ॥
याविना महाराज कथंधारयसे प्रजाः । अहं यदा स्थिरा राजंस्तदालोकाश्चराचराः ॥
स्थिरत्वं यान्ति ते सर्वे स्थिरीभूता यदाह्यहम् ।
मां विना तु इमे लोका विनश्येयुश्चराचरः ॥ १११ ॥
तः प्रजा विनश्येयुर्ममनाशे समागते । कथं धारयिता चासि प्रजा राजन्मया विना ॥
यिलोकाःस्थिरा राजन्मयेदं धार्यते जगत् । मद्विनाशे विनश्येयुःप्रजाःसर्वा न संशयः
मामर्हसि वै हन्तुं श्रेयश्चेत्त्वं चिकीर्षसि । प्रजानां पृथिवीपाल शृणुदेव वचोमम ॥
पायैश्च महाभाग सुसिद्धियान्त्युपक्रमाः । समालोक्य ह्युपायंत्वं प्रजा येनधरिष्यसि
ं हत्वा त्वं महाराज धारणेपालने सदा । पोषणे च महाप्राज्ञ मद्विनाहि कथंनृप ॥
धरिष्यसि प्रजां चेमां कोपं यच्छत्वमात्मनः ।

अन्नमया भविष्यामि धरिष्यामि प्रजामिमाम् ॥ ११७ ॥

अहंनारी अवध्या च प्रायश्चित्तीभविष्यसि। अवध्यांतुस्त्रियंप्राहुस्तिर्यग्योनि
विचार्यैवं महाराज न धर्मंत्यक्तुमर्हसि। एवंनानाविधैर्वाक्यैरुक्तोधान्यानर्था
कोपमेनं महाराज त्यज दारुणमे वहि। प्रसन्ने त्वयि राजेन्द्र तदा स्वस्था भ
एवमुक्तस्तयाराजापृथुर्वैन्यःप्रजापतिः। तामुवाच महाभागां धरित्रीं द्विजस
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे पृथूपाख्यानेऽष्टाविंशोऽध्यायः ॥२

---

# ऊनत्रिंशोऽध्यायः

## पृथ्वीम्प्रति पृथोरुक्तिः।

पृथुरुवाच।

हतेचैव महापापेएकस्मिन्पापचारिणि। लोकाःसुखेन जीवन्ति साधवःपुण्य
तस्मादेकःप्रहर्तव्यःपापिष्ठःपापचेतनः। तस्मात्त्वां हि हनिष्यामिसर्वसत्त्वप्रणा
त्वया वीजानि सर्वाणि लुप्तान्येतानि साम्प्रतम्।
ग्रासं कृत्वा स्थिरीभूत्वा प्रजा हत्वा क यास्यसि ॥ ३ ॥
हते पापे दुराचारे सुखं जीवन्ति साधवः। तस्मात्पापा प्रहन्तव्या सत्यमेवं न
पालितव्यः प्रयत्नेन यस्माद्धर्मःप्रवर्द्धते। भवत्या तु महत्पापं प्रजासंक्षयका
एकस्यार्थे न यो हन्यादात्मनो वापरस्यवा। लोकोपतापकंहत्वा न भवेत्तस्य
यस्मिंस्तु निहते पाप एकस्मिन्स्त्रे परे तथा। बहवस्सुखमेधन्ते हन्याद्दुष्टं न
प्रजानिमित्तं त्वामेव हनिष्यामि न संशयः। यदिमे पुण्यसंयुक्तं वचनं न क
जगतोऽस्य हितार्थायसाधुचैववसुन्धरे। हनिष्येत्वांशितैर्बाणैर्मद्वाक्यात्तुपराङ्
स्वीर्येन तेजसा चैव पुण्यास्त्रैलोक्यवासिनीः।
प्रजाश्चाहं धरिष्यामि धर्मेणापि न संशयः ॥ १० ॥



मच्छासनं समास्थाय धर्मयुक्तं वसुन्धरे। इमाः प्रजा आज्ञया मे सञ्जीवय स

से शासनं भद्रे अद्ययर्हि करिष्यसि । ततःप्रीतोऽस्मितेनित्यंगोपायिष्यामिसर्वदा
मेव हि न सन्देह अन्येचैव नृपोत्तमाः । धेनुरूपेण सा पृथ्वी वाणाञ्चितकलेवरा ॥
उवाचेदं पृथुं वैन्यं धर्माधारं महामतिम् ॥ १४ ॥

धरण्युवाच ।

दिशं महाराज सत्यपुण्यार्थसंयुतम् । प्रजानिमित्तमत्यर्थं विधास्यामि न संशयः ॥
मेनापि पुण्येन उपायेन नरेश्वर । समारम्भाःप्रसिद्ध्यन्ति पुण्याश्चैवाप्युपक्रमाः ॥
यं पश्य राजेन्द्र येन त्वं सत्यवान्भवेः । धारयेथाःप्रजाश्चेमा येनसर्वाःप्रवर्द्धयेः ॥
नाश्चोत्तमावाणी ममाङ्गे ते शिलाशिताः ।समुद्धर स्वयंराजंश्छल्यन्निभृतमेव मे
समां कुरु महाराज तिष्ठेन्मयि यथा पयः ॥ १८ ॥

सूत उवाच ।

घोऽग्रेण ताञ्छैलान्नानारूपान्गुरूंस्तथा । उत्सारयंस्ततःसर्वां समरूपां चकारसः
प्रभृति ते शैला वृद्धिमापुर्द्विजोत्तमाः । तस्याअङ्गात्स्वयंवाणान्स्वकीयान्नृपनन्दनः
दुद्धृत्य ततोवैन्यःप्रीतेन मनसा तदा । गर्ताश्च कन्दराश्चैव वाणाघातैःसमीकृताः ॥
पृथ्वीं समांसर्वां चकार पुण्यवर्द्धनः । समीकृत्य महाभागो वत्संतस्याप्यकल्पयत्
स्वायम्भुवं पूर्वं परिचिन्त्य पुनःपुनः । अतीतेष्वथ सर्वेषु मन्वन्तरेषु सत्तमाः ॥
विषमत्वं गता भूमिःपन्थानासीच्च कुत्रचित् ।
समानि विषमाण्येवं स्वयमासन्द्विजोत्तमाः ॥ २४ ॥
मनोश्चाक्षुषस्य प्राप्ते चैवान्तरे तदा । जाते पूर्वविसर्गे च विषमे च धरातले ॥
ाणां च पुराणां च पत्तनानां तथैव च । देशानां क्षेत्रपन्नानां मर्यादा न हि दृश्यते
नैव न वाणिज्यं न गोरक्षा प्रवर्तते । नानृतंभाषते कश्चिन्नलोभो न च मत्सरः॥
भेमानं च वै पापं न करोति कदाकिल। वैवस्वतस्य सम्प्राप्ते अन्तरे द्विजसत्तम? ॥
स्य सम्भवात्पूर्वं प्रजानामेव सम्भवः । इमाःप्रजाद्विजाःसर्वा निवसिं समरोचयन्
वेद्भूमौ गिरौकापि नदीतीरेषु वै तदा । कुञ्जेषु सर्वतीर्थेषु सागरस्यतटेषु च ॥
ासंचक्रिरे सर्वाःप्रजाःपुण्येन वै तदा । तासामाहारःसञ्जात फलंमूलं तथामधु ॥

महताकृच्छ्रेण तासामाहारश्च द्विजोत्तमाः। पृथुर्वैन्यः समालोक्य प्रजानांका
स्वायम्भुवो मनुर्वत्सःकल्पितस्तेन भूभुजा। स्वपाणिः कल्पितस्तेन पात्रमें
सपृथुःपुरुषव्याघ्रो दुदोह वसुधां तदा। सर्वसस्यमयंक्षीरं स सर्वान्नं गुणा

तेन पुण्येन चान्नेन सुधाकल्पेन ताः प्रजाः।
तृप्तिं नयन्ति देवान्वै प्रजाःपितॄंस्तथाऽपरान् ॥ ३५ ॥
प्रसादात्तस्य वैन्यस्य सुखं जीवन्ति ताः प्रजाः।
देवेभ्यश्च पितृभ्यश्च दत्त्वा चान्नं प्रजास्ततः ॥ ३६ ॥
ब्राह्मणेभ्यो विशेषेण अतिथिभ्यस्तथैव च।
पुण्यास्ता भुञ्जते पश्चात् प्रजाः सर्वा द्विजोत्तमाः ॥ ३७ ॥

यज्ञैश्चान्ये यजन्त्येव तर्पयन्ति जनार्दनम्। तेन चान्नेन देवेशं तृप्तिं गच्छति
पुनर्वर्षति पर्जन्यः प्रेषितो माधवेन च। तस्मात्पुण्या महौषध्यः सम्भवन्ति

सस्यजातानि सर्वाणि पृथोः प्रभृति नान्यथा।
तेनान्नेन प्रजाः सर्वा वर्तन्तेऽद्यापि नित्यशः ॥ ४० ॥

ऋषिभिश्चैव मिलितैर्दुग्धा चेयं वसुन्धरा। पुनर्विप्रैर्महाभाग्यैः सत्यवद्भिः सु

सोमो वत्सस्वरूपोऽभूद्दोग्धा देवगुरुः स्वयम्।
ऊर्जं क्षीरं पयः कल्पं येन जीवन्ति चामराः ॥ ४२ ॥

तेषामन्नेन पुण्येन सर्वे जीवन्ति जन्तवः। सत्यपुण्ये प्रवर्त्तन्ते ऋषिदुग्धा

अथातः सम्प्रवक्ष्यामि यथा दुग्धा इयं धरा।
पितृभिश्च पुरा वत्स विधिना येन वै तदा ॥ ४४ ॥

सुपात्रं राजतंकृत्वा स्वधाक्षीरं सुधान्वितम्। परिकल्प्य यमंवत्संदोग्धाचा
नागैः सर्पैस्ततो दुग्धा तक्षकं वत्समेव च। अलाबुपात्रमादाय विषं क्षीरं
नागानां तु तथा दोग्धा धृतराष्ट्रःप्रतापवान् सर्पानागाद्द्विजश्रेष्ठास्तेनवर्त
नागा वर्तन्तितेनापि ह्युग्रेण द्विजोत्तमाः। विषेण घोररूपेण सर्पाश्चैव
तेनैव वर्तयन्त्युग्रा महाकाया महाबलाः। तदाहारास्तदाचारास्तद्वीर्यास्तत

[अ]तःसम्प्रवक्ष्यामि यथादुग्धा वसुन्धरा। असुरैर्दानवैःसर्वैःकल्पयित्वाद्विजोत्तमाः
[अ]मन्त्रान्नलौहमायसं सर्वकामिकम्। क्षीरं मायामयंकृत्वा सर्वारातिविनाशनम्॥

तेषामभूत्स वै वत्सो विरोचनः प्रतापवान्।
ऋत्विग्द्विमूर्धा दैत्यानां मधुर्दोग्धा महाबलः॥ ५२॥
तथा हि मायया दैत्याः प्रवर्तन्ते महाबलाः।
महाप्रज्ञा महाकाया महातेजः पराक्रमाः॥ ५३॥

[ब]लंपौरुषं तेषां तेन जीवन्ति दानवाः। तथैते माययाद्यापि सर्वमायाद्विजोत्तमाः॥
[व]र्तन्तेऽमितप्रज्ञास्तै तदेषामिदं बलम्। तथा तु दुग्धायक्षैःसा सर्वाधारासुमेदिनी॥
[शु]श्रुम विप्रेन्द्राः पुराकल्पे महात्मभिः। अन्तर्धानमयं क्षीरमयस्पात्रे सुविस्तरे॥
[वै]श्रवणो महाप्राज्ञस्तदा वत्सःप्रकल्पितः। मणिधरस्य पितापुण्यःप्राज्ञो बुद्धिमतांवरः
[दो]ग्धा रजतनाभस्तु तस्याश्चासीन्महामतिः। सर्वज्ञः सर्वधर्मज्ञो यक्षराजसुतोवली॥
[म]हाबाहुर्महातेजा द्विशीर्षःसुमहातपाः। यक्षावर्तन्ति तेनापि सर्वदैव द्विजोत्तमाः॥
[पुन]र्दुग्धा इयंपृथ्वी राक्षसैश्च महाबलैः। तथाचैषा पिशाचैश्च सातुरैर्दुग्धवारिभिः॥

उत्प्लुतं नृकपालं तं शावपात्रमयस्कृतम्।
सुप्रजां भोक्तुकामास्ते तीव्रकोपपराक्रमाः॥ ६१॥

[दो]ग्धा रजतनाभस्तु तेषामासीन्महाबलः। सुमालीनामवत्सश्च शोणितं क्षीरमेव च॥
[र]क्षांसि यातुधानाश्च पिशाचाश्च महाबलाः। यक्षास्तेन च जीवन्ति भूतसङ्घाश्च दारुणाः

गन्धर्वैरप्सरोभिश्च पुनर्दुग्धा वसुन्धरा।
कृत्वा वत्सं सुविद्वांसं तैश्च चित्ररथं पुनः॥ ६४॥

[अ]दुहुःपद्मपात्रे तु गान्धर्वं गीतसङ्कुलम्। सुरुचिर्नामगन्धर्वस्तेषामासीन्महामतिः॥
[दो]ग्धा पुण्यतमश्चैव तस्याश्च द्विजसत्तमाः। शुचिगीतं महात्मानःसुक्षीरं दुदुहुस्तदा
[गन्]धर्वास्तेन जीवन्ति यक्षाश्चाप्सरसस्तथा। पर्वतैश्च महापुण्यैर्दुग्धाचेयं वसुन्धरा॥
[रत्ना]निविविधान्येव ओषधीश्चामृतोपमाः। वत्सश्चैव महाभागो हिमवान्परिकल्पितः
[मे]रुर्दोग्धा च सञ्जातःपात्रंकृत्वा तु शैलजम्। तेनक्षीरेण संवृद्धाःशैलाःसर्वैमहोच्छ्रयाः

पुनर्दुग्धा महावृक्षैः पुण्यैःकल्पद्रुमादिभिः। पालाशं पात्रमानिन्युश्छिन्नदग्ध
शालो दुदोह पुण्याङ्गः प्लक्षोवत्सोऽभवत्तदा।
गुह्यकैश्चारणैःसिद्धैर्विद्याधरगणैस्तदा ॥ ७१ ॥

दुग्धाचेयं सर्वधात्री सर्वकामप्रदायिनी। यं यमिच्छन्ति ये लोकाः पात्रवत्सं
तैस्तैस्तेषां ददात्येव क्षीरं सद्भावमीदृशम्। इयं धात्री विधात्री तु इयं श्रेष्ठ
सर्वकामदुघा धेनुरियं पुण्यैरलङ्कृता। इयंज्येष्ठा प्रतिष्ठा तु इयं सृष्टि
पावनी पुण्यदा पुण्या सर्वशस्यप्ररोहिणी। चराचरस्य सर्वस्य प्रतिष्ठायोनि
महालक्ष्मीरियं विद्या सर्वविश्वमयी सदा। सर्वकामदुघा दोग्ध्री सर्वबीज
सर्वेषां श्रेयसांमाता सर्वलोकधरा त्वियम्। पञ्चानामपि भूतानां प्रकाशो
आसीदियं समुद्रान्ता मेदिनीति परिश्रुता। मधुकैटभयोःकृत्स्ना मेदसा स
तेनेयं मेदिनीनाम प्रोच्यते ब्रह्मवादिभिः। ततोऽभ्युपगमात्प्राज्ञ पृथोर्वैन्यस्य
दुहितृत्वमनुप्राप्ता देवीपृथ्वीति चोच्यते। तेनराज्ञा द्विजश्रेष्ठाः पालितेयं च
ग्रामाधारा गृहाढ्या च पुरपत्तनमालिनी। सस्या करवतीस्फीता सर्वतीर्थ
एवं वसुमतीदेवी सर्वलोकमयी सदा। एवं प्रभावो राजेन्द्रः पुराणे परिपठ्यते
पृथुर्वैन्यो महाभागः सर्वकर्मप्रकाशकः। यथाविष्णुर्यथाब्रह्मा यथारुद्रः
नमस्कार्यास्त्रयो देवा देवाद्यैर्ब्रह्मवादिभिः।
ब्राह्मणैर्ऋषिभिः सर्वैर्नमस्कार्यो नृपोत्तमः ॥ ८४ ॥
वर्णानामाश्रमाणां यःस्थापकःसर्वलोकधृक्।
पार्थिवैश्च महाभागैःपार्थिवत्वमिहेप्सुभिः ॥ ८५ ॥

आदिराजो नमस्कार्यःपृथुर्वैन्यःप्रतापवान्। धनुर्वेदार्थिभिर्योधैःसदैव जयका
नमस्कार्यो महाराजो वृत्तिदाता महीभृताम्।
एवं पात्रविशेषाश्च मयाख्याता द्विजोत्तमाः ॥ ८७ ॥

वत्सानां च विशेषाश्च दोग्धॄणां भवन्मतः। क्षीरस्यापि विशेषं तु यथोद्दि
समाख्यातं तथाग्रे च भवतां वै यथार्थतः। धन्यं यशस्यमारोग्यं पुण्यं पाप

वैन्यस्यचरितं यःशृणोतिद्विजोत्तमाः । तस्य भागीरथीस्नानमहन्यहनि जायते ॥
सर्वपापविशुद्धात्मा विष्णुलोकं प्रयाति सः ॥ ६१ ॥

इति श्रीपाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीयेभूमिखण्डे पृथूपाख्याने एकोनत्रिंशोऽध्यायः ॥२६॥

---

## त्रिंशोऽध्यायः

### विस्तरेण वेनचरित्रवर्णनम् ।

ऋषय ऊचुः ।

योऽसौ वेनस्त्वयाऽख्यातःपापाचारेण वर्तितः ।
तस्य पापस्य का वृत्तिःकिं फलं प्राप्तवान्द्विज ॥ १ ॥
चरित्रं तस्य वेनस्य समाख्याहि यथापुरा । विस्तरेण विदांश्रेष्ठ त्वं न एतन्महामते ॥

सूत उवाच ।

चरित्रं तस्य वेनस्य वैन्यस्यापि महात्मनः । प्रवक्ष्यामि सुपुण्यंच यथान्यायं श्रुतंपुरा
सुपुत्रे महाभागे तस्मिन्पृथौ महात्मनि । विमलत्वं गतोराजा धर्मत्वं गतवान्पुनः ॥
पापानि सर्वाणि अर्जितानि नराधमैः । तीर्थसङ्गप्रसङ्गेन तेषां पापं प्रयाति च॥५॥
सङ्गात्प्रजायेत पुण्यमेव न संशयः । पापानां तु प्रसङ्गेन पापमेव प्रजायते ॥ ६ ॥
सम्भाषाद्दर्शनात्स्पर्शादासनाद्भोजनात्किल ।
पापिनां सम्भवाच्चैव किल्बिषं परिसञ्चरेत् ॥ ७ ॥
पुण्यात्मकानां च पुण्यमेव प्रसञ्चरेत् । महातीर्थप्रसङ्गेन पापाःशुध्यन्ति नान्यथा
पुण्यां गतिंप्रयान्त्येते निर्द्धूता शेषकल्मषाः ॥ ६ ॥

ऋषय ऊचुः ।

यांयान्ति ते पापाःपरांसिद्धिं द्विजोत्तम । ततो विस्तरतो ब्रूहि श्रोतुं श्रद्धा प्रवर्तते

सूत उवाच ।

लुब्धकाश्च महापापाःसञ्जाता दासधीवरा । रेवा चयमुनागङ्गातासामम्भसि
ज्ञानतोऽज्ञानतःस्नात्वा सङ्क्रीडन्ते च वै जले । महानद्याःप्रसङ्गेनतेयान्तिपर
दासत्वंपापसङ्घातं परित्यज्य व्रजन्ति ते । पुण्यतोयप्रसङ्गाच्च ह्याप्लुताःस
महानद्याःप्रसङ्गाच्च अन्यासां नैवसत्तमाः । महापुण्यजनस्यापि पापंनश्यति
प्रसङ्गाद्दर्शनात्स्पर्शान्नात्र कार्या विचारणा । अत्रार्थे श्रूयते विप्रा इतिहासो
तंवोह्यद्य प्रवक्ष्यामिबहुपुण्यप्रदायकम् । कश्चिदस्ति मृगव्याधः सुलोभाख्यः
श्वभिर्वागुरिजालैश्च धनुर्बाणैस्तथैवच । मृगान्घातयतेनित्यं पिशितास्वा
एकदा तु सुदुष्टात्मा बाणपाणिर्धनुर्धरः । श्वभिःपरिवृतोदुर्गं वनंविन्ध्यस्य
मृगान्रुरून्वराहांश्च भीतान्सूदितवान्बहून् । रेवातीरं समासाद्य कश्चिच्छफर
शफरान्सूदयित्वा स निर्जगाम बहिर्जलात् । मृगव्याधस्यलोभस्य भयत्रस्ता

जीवत्राणपरा साऽर्ता भीता चलितचेतना ।
त्वरमाणा पलायन्ती रेवातीरं समाश्रिता ॥ २१ ॥

श्वभिश्चचालिता सा तु बाणघातक्षतातुरा । श्वसनस्यापि वेगेन सुलोभो
पृष्ठएव समायाति पुरतोयाति सामृगी । दृष्टवांस्तां शफरहा बाणपाणिः
धनुरानम्यवेगेन अनुरुध्य च तांमृगीम् । तावल्लुब्धकलोभाख्यःश्वभिःसा
न हन्तव्या मदीयेयं मृगयां मे समागता । तस्यवाक्यं समाकर्ण्य मीनहामांस
बाणं मुमोच दुष्टात्मा तामुद्दिश्य महाबलः । निहता मृगलुब्धेन बाणेन

प्रमृता सा मृगी तत्र बाणाभ्यां पापचेतसोः ।
श्वभिर्दन्तैःसमाक्रान्तो त्वरमाणा पपात सा ॥ २७ ॥

शिखराच्च ह्रदेपुण्ये रेवायाःपापनाशने । श्वानश्च त्वरमाणास्ते पतिता
मृगव्याधोवदत्येवं धीवरं क्रोधमूर्च्छितः । मदीयेयं मृगी दुष्ट कस्माद्बाणैर्हता
तमुवाचपुनःसोऽपि मीनहामृगघातकम् । मदीयेयं न सन्देहश्चावलिप्त
युध्यमानौ ततस्तौ तु द्धावेतौ तु परस्परम् । क्रोधलोभान्महाभागौ पतितौ

तस्मिन्काले महापर्व वर्तते गतिदायकम् ।
अमावास्यासमायोगं महापुण्यफलप्रदम् ॥ ३२ ॥

यां पतिताःसर्वे पर्वणस्तस्यसत्तमाः । जपध्यानविहीनास्ते भावसत्यविवर्जिताः
स्नानप्रसङ्गेन मृगीश्वा च स लुब्धकः । सर्वपापविनिर्मुक्तास्तेगताःपरमांगतिम् ॥
नां च प्रभावेण सतांसङ्गाद्द्विजोत्तमाः । नाशंतेत्पापिनांतापं दहदग्निरिवेन्धनम्
मेवं हि संसर्गाद्दृषीणां च महात्मनाम् । सम्भाषाद्दर्शनान्नष्टं स्पर्शाच्चैव नृपस्यच
स्य कल्मषंनष्टं सतांसङ्गात्पुराकिल । अत्युग्रपुण्यसंसर्गात्पापंनश्यति पापिनाम् ॥
ग्रपापिनांसङ्गात्पापमेव प्रसञ्चरेत् । मातामहस्यदोषेण संलिप्तो वेन एव सः ॥

ऋषय ऊचुः ।

महस्य कोदोषस्तन्नो विस्तरतो वद । समृत्युः सच वैकालः सयमो धर्म एव च
सको हि कस्यापि पदेतस्मिन्प्रतिष्ठितः । चराचराश्चये लोकाःस्व कर्मवशवर्तिनः
जीवन्ति च म्रियन्ते च भुञ्जन्त्येवं स्वकर्मभिः ।
पापाः पश्यन्ति तं घोरं तेषां कर्मविपाकतः ॥ ४१ ॥

ष्वेषु च सर्वेषु कर्मणैवं सुपुण्यवान् । योजयेत्ताडयेत्सूत यम एष दिने दिने ॥४२॥
ष्वेव सुपुण्येषु कर्मस्वेवं स पुण्यवान् । योजयत्येवधर्मात्मा तस्यदोषो नदृश्यते
स मृत्योः केनदोषेण पापी वेनस्त्वजायत ॥ ४३ ॥

सूत उवाच ।

मृत्युःशासको नित्यं पापानां दुष्टचेतसाम् ॥ ४४ ॥
कालरूपेणतेषां कर्म विमृश्यति । दुष्कृतं कर्म यस्यापि कर्मणातेन घातयेत् ॥
पापं विदित्वासौ नयत्येवं हि तं यमः । सुकृतात्मा लभेत्स्वर्गं कर्मणासुकृतेन वै
यत्येष तान्सर्वान्मृत्युरेव सुदूतकैः । महता सौख्यभावेन गीतमङ्गलकारिणा ॥
दानभोगादिभिश्चैव योजयेच्च कृतात्मकान् ।
पीडाभिर्विवधाभिश्च क्लेशैःकाष्ठैश्चदारुणैः ॥ ४८ ॥

येत्ताडयेद्विप्रलक्ष्मोभे मृत्युरेवम् । ... हितेष्वपि व्यापारःपरिवर्तते

मृत्योश्चापि महाभाग लोभात्पुण्यात्प्रजायते । सुनीथानामवैकन्यासञ्जातै
पितुःकर्म विमृश्यैव क्रीडमाना सदैवसा । प्रजानां शास्तिकर्तारंपुण्यपापं
सा तु कन्या महाभागा सुनीथा नाम तस्य सा ।
रममाणा वनं प्राप्ता सखीभिःपरिवारिता ॥ ५२ ॥
तत्रापश्यन्महाभागं गन्धर्वतनयं वरम् । गीतकोलाहलस्यापि सुशङ्खंनाम
ददर्श चारुसर्वाङ्गं तप्यन्तं सुमहत्तपः । गीतविद्यासु सिद्ध्यर्थं ध्यायमानं
तस्योपघातमेवासौ साचकार दिने दिने । सुशङ्खःक्षमतेनित्यं गच्छगच्छेति
प्रेषिता नैव गच्छेत्सा विघ्नमेव समाचरेत् ।
तेनैवमुक्ता सा क्रुद्धाऽताडयत्तपसि स्थितम् ॥ ५६ ॥
तामुवाचततःक्रुद्ध सुशङ्खःक्रोधमूर्च्छितः । दुष्टेपापसमाचारे कस्माद्विघ्नस्त
ताडनात्ताडनंदुष्टे न कुर्वन्ति महाजनाः । आक्रुष्टानैव कुप्यन्ति इतिधर्मस्य
त्वयाऽहं घातितःपापे निर्दोषस्तपसान्वितः ।
एवमुक्त्वा स धर्मात्मा सुनीथां पापचारिणीम् ॥ ५९ ॥
विरराम महाक्रोधाज्ज्ञात्वा नारींन्निवर्तितः । ततः सपापमोहाद्वा बाल्याद्वा
समुवाच महात्मानं सुशङ्खं तपसिस्थितम् । त्रैलोक्यवासिनां तातो ममैव
असतोघातयेन्नित्यं सत्यान्स परिपालयेत् । नैवदोषो भवेत्तस्य महापुण्ये
एवमुक्त्वा गता सातु पितरं वाक्यमब्रवीत् । मया हि ताडितस्तात गन्धर्व
तपस्तपन्सदैकान्ते कामक्रोधविवर्जितः । समामुवाच धर्मात्मा क्रोधरागवि
नाताययेत्ताडयन्तं क्रोशन्तं नैव क्रोशयेत् । इत्युवाच स मां तात तन्मे त्वं
एवमुक्तः सवै मृत्युःसुनीथां द्विजसत्तमाः । किञ्चिन्नोवाच धर्मात्मा प्रश्नप्रति
वनंप्राप्ता पुनःसा हि सुशङ्खो यत्र संस्थितः ।
कशाघातैस्ततो दौष्ट्याज्जघान तपतांवरम् ॥ ६७ ॥
सुशङ्खस्ताडितो विप्रा मृत्योश्चैव हि कन्यया । ततःक्रुद्धोमहातेजाःशशाप तं
निर्दोषो हि यतो दुष्टे त्वयैव परिताडितः । अहमत्र वने संस्थस्तस्माच्छापं

गार्हस्थ्यं च समास्थाय सहभर्त्रा यदा शृणु ।
पापाचाररतः पुत्रो देवब्राह्मणनिन्दकः ॥ ७० ॥

पापरतो दुष्टे तवगर्भे भविष्यति । एवं शप्त्वागतःसोऽपि तपएव समाश्रितः ॥
तस्मिन्महाभागे सा सुनीथा गृहंगता । समाचष्ट महात्मानं पितरं तप्तमानसा ॥
शप्ता तदा तेन गन्धर्वतनयेन सा । तत्सत्रं संश्रुतं तेन मृत्युना परिभाषितम् ॥
न्त्वया ताडितोऽसौ तपस्वी दोषवर्जितः । युक्तंनैव कृतंपुत्री तपतस्तस्य ताडनम्

एवमाभाष्य धर्मात्मा मृत्युःपरमदुःखितः ।
बभूव स हितन्तस्यादिष्टमेवं विचिन्तयन् ॥ ७५ ॥

सूत उवाच ।

पुत्रो महातेजा अङ्गोनाम प्रतापवान् । एकदा तु गतो विप्रा नन्दनंप्रति स द्विजः ॥
दृष्ट्वा देवराजं तमिन्द्रं पाकशासनम् । अप्सरसांगणैर्युक्तं गन्धर्वैःकिन्नरैस्तथा ॥
मानं गीतगैश्च सुस्वरैःसप्तकैस्तथा । वीज्यमानं सुगन्धैश्च व्यजनैःसर्वतोऽपि तम्
ष्ट्रीरूपयुक्ताभिश्चामरैर्हंसगामिभिः । छत्रेण हंसवर्णेन चन्द्रबिम्बानुकारिणा॥७९॥
मानं सहस्राक्षं सर्वाभरणभूषितम् । कामक्रीडा गतंदेवं दृष्टवानमितौजसम् ॥

तस्य पार्श्वे महाभागां पौलोमीं चारुमङ्गलाम् ।
रूपेण तेजसा चैव तपसा च यशस्विनीम् ॥ ८१ ॥

ाग्येन विराजन्तीं पातिव्रत्येन तां सतीम् । तयासह सहस्राक्षः सरेमे नन्दनेवने ॥
लीलांसमालोक्य अङ्गश्चैव द्विजोत्तमः । धन्यो वै देवराजोऽयमीदृशैःपरिवारितः
ऽस्य तपसोवीर्यं येन प्राप्तं महत्पदम् । यदा ममेदृशःपुत्रःसर्वलोकप्रधारकः ॥
तदा महत्सौख्यं प्राप्स्यामीह न संशयः । इतिचिन्तापरोभूत्वा त्वरमाणो गृहंगतः

इति श्रीपाद्मपुराणे भूमिखण्डे वेनोपाख्याने त्रिंशोऽध्यायः ॥ ३० ॥

# एकत्रिंशोऽध्यायः

अङ्गस्यात्र्युपदेशेनेन्द्रसदृशपुत्रप्राप्तये तपस्याकरणार्थगमनम्।

सूत उवाच।

अथत्वङ्गोमहातेजा दृष्ट्वेन्द्रस्यसम्पदम्। भोगंचैवविलासं च लीलां तर

कथं मे इन्द्रसदृशःपुत्रःस्याद्धर्मसंयुतः। चिन्तयित्वा क्षणं चैव अङ्गो धर्म

स्वकं गेहं समायातःसत्वङ्गःसत्यतत्परः। अत्रिं पप्रच्छपितरं प्रणतो नम्र

कोऽयं पुण्यसमाचारो भुङ्क्त ऐन्द्रंपदं महत्।

कस्य पुण्यस्य वै पुष्टिःकिं कृतं कर्म कीदृशम्॥ ४॥

कीदृशं तप एतस्य कमाराधितवान्पुरा। एतन्मे विस्तारेण त्वं ब्रूहि स

अत्रिरुवाच।

साधुसाधु महाभाग यद्येवं पृच्छसे मयि। चरित्रमिन्द्रस्य वत्स तन्मे वि

सुव्रतोनाम मेधावी पुरा ब्राह्मणसत्तमः। तेन कृष्णो हृषीशस्तपसाचैव

पुण्यं गर्भं पुनःप्राप्तो ह्यदित्याःकश्यपात्किल।

विष्णोश्चैव प्रसादेन सुरराजो बभूवह॥ ८॥

अङ्ग उवाच।

कथमिन्द्रसमःपुत्रो ममस्यात्पुत्रवत्सल। तदुपायं समाचक्ष्व त्वं हि

अत्रिरुवाच।

समासेनैव तस्यैव सुव्रतस्य महात्मनः। चरित्रमखिलंपुण्यं निशामय म

यथा सुव्रतमेधावी पुराराधितवान्हरिम्। तस्यभावं च भक्तिं च ध्यानंचैव

समालोक्य जगन्नाथो दत्तवान्वै महत्पदम्।

स ऐन्द्रं सर्वभोगाढ्यं त्रैलोक्यं सचराचरम्॥ १२॥



विष्णोश्चैवप्रसादाच्चपदंभुङ्क्तेत्रिलोकधृक्। एवंतेसर्वमाख्यातमिन्द्रस्या

स्यातुष्यति गोविन्दो भावध्यानेनसत्तम। सर्वंददातितुष्टात्मा भक्त्यासन्तोषितोहरिः
मादाराध्य गोविन्दं सर्वदं सर्वसम्भवम्। सर्वज्ञं सर्ववेत्तारं सर्वेषां पुरुषंवरम्॥
तस्मात्प्राप्स्यसि सर्वं त्वं यद्यदिच्छसि नन्दन ॥ १६ ॥
सुखस्यदाता परमार्थदाता मोहस्यदाता जगतां हि नाथः।
तस्मात्तमाराधय गच्छ पुत्र सम्प्राप्स्यसे इन्द्रसमं हि पुत्रम् ॥ १७ ॥
आकर्ण्य वाक्यं परमार्थयुक्तमुक्तं महात्मा ऋषिणा हि तेन।
सङ्गृह्य तत्त्वं वचनस्य तस्य प्रणम्य तं शाश्वतमभ्ययात्सः ॥ १८ ॥
आमन्त्र्य चाङ्गः पितरं महात्मा ब्रह्मात्मजं ब्रह्मसमानमेव।
सम्प्राप्तवान्मेरुगिरेस्तु श्रृङ्गं तं काञ्चनै रत्नमयैःसमेतम् ॥ १९ ॥

इति श्रीपाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे वेनोपाख्याने
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः

### अङ्गस्य तपःकरणात्प्रादुर्भूतवासुदेवस्यस्तोत्रकरणम्।

सूतउवाच।

नारत्नैःसुदीप्ताङ्गो हाटकेनापि सर्वतः। राजमानो गिरिश्रेष्ठो यथासूर्यःस्वरश्मिभिः
यामशोकांसम्प्राप्य शीतलांसुखदायिनीम्। ध्यायन्ति योगिनःसर्वेउपविष्टादृढासने
क्वचित्तपन्ति मुनयःक्वचिद्गायन्ति किन्नराः।
सन्तुष्टा ऋषिगन्धर्वा वीणातालकराविलाः ॥ ३ ॥
लमानलयेलीनाः स्वरैः सप्तभिरन्वितैः। मूर्च्छनारतिसंयुक्तैर्व्यक्तं गीतंमनोहरम्॥
स्मिन्वै पर्वतश्रेष्ठे चन्दनच्छायसंश्रिताः। गन्धर्वा गीततत्त्वज्ञा गीतंगायन्ति तत्पराः
यन्ति योषितस्तत्र देवतां पर्वतोत्तमे। पापहा पुण्यदो दिव्यःश्रेयसां प्रदायकः॥

वेदध्वनिःसुमधुरःश्रूयते पर्वतोत्तमे। चन्दनाशोकपुन्नागैःशालैस्तालैस्तमालै
वटैस्तु मेघसङ्काशै राजते पर्वतोत्तमः। सन्तानकैःकल्पवृक्षै रम्भापादपसङ्कु
नगेन्द्रो भाति सर्वत्र नाकवृक्षैःसुपुष्पितैः।
नानाधातुसमाकीर्णो नानारत्नचयो गिरिः॥ ६॥
नानाकौतुकसंयुक्तो नानामङ्गलसंयुतः। वेदवृन्दैःसुसञ्जुष्टो ह्यप्सरोगण
ऋषिभिर्मुनिभिःसिद्धैर्गन्धर्वैः परिभाति सः। गजैश्चाचलसङ्काशैःसिंहनादैः
शरभैर्मत्तशार्दूलैर्मृगयूथैरलङ्कृतः। वापीकूपतडागैश्च सम्पूर्णैर्विमलोदकै
हंसकारण्डवाकीर्णैः सर्वत्र परिशोभते।
कनकोत्पलैश्च श्वेतैश्च रक्तोत्पलैर्विराजते॥ १३॥
नदीस्रवणसङ्घातैर्विमलैश्चोदकैस्तथा। शालतालैश्च रूपैश्च सगजैःस्फाटि
विस्तीर्णैःकाञ्चनैर्दिव्यैःसूर्यवह्निसमप्रभैः। शिलातलैश्च सम्पूर्णःशैलराजो
विमानैर्देवतानां च प्रासादैःपर्वतोत्तमैः। हंसचन्द्रप्रतीकाशैर्हेमदण्डैरलङ्कृत
कलशैश्चामरैर्युक्तैःप्रासादैःपरिशोभितः। नानागुणप्रमुदितदेववृन्दैश्च शोभि
देववृन्दैरनेकैश्च गन्धर्वैश्चारणैस्तथा। सर्वत्र राजते पुण्यो मेरुर्गिरिवरोत्तम
तस्माद्गङ्गा महापुण्या पुण्यतोया महानदी।
प्रसूता पुण्यतीर्थाढ्या हंसपद्मैःसमाकुला॥ १६॥
मुनिभिःसेव्यमाना सा ऋषिसङ्घैर्महानदी। एवंगुणं गिरिश्रेष्ठं पुण्यकौतु
अङ्गश्चात्रिसुतःपुण्यःप्रविवेश महामुनिः। गङ्गातीरे सुपुण्ये च एकान्ते
तत्रोपविश्य मेधावी कामक्रोधविवर्जितः।
सर्वेन्द्रियाणि संयम्य हृषीकेशं मनोगतम्॥ २२॥
ध्यायमानःसधर्मात्मा कृष्णं क्लेशापहं प्रभुम्। आसने शयनेयाने ध्याने
नित्यं पश्यति युक्तात्मा योगयुक्तो जितेन्द्रियः। चराचरेषु जीवेषु तेषु
आर्द्रेषु चैव शुष्केषु सर्वेष्वन्येषु स द्विजः।
एवं वर्षशतं जातं तप्यमानस्य तस्य च॥ २५॥

लोक्य जगन्नाथश्चक्रपाणिर्द्विजोत्तमम् । बहुविघ्नान्सुघोरांश्च दर्शयत्येव नित्यशः
सा तस्यद्देवस्य नृसिंहस्य महात्मनः । निरातङ्कःसधर्मात्मा दहत्यग्निरिवेन्धनम् ॥
मैःसंयमैश्चान्यैरुपवासैर्द्विजोत्तमः । क्षीयमाणस्तु सञ्जातो दीप्यमानःस्वतेजसा ॥
पावकसङ्काशस्त्वङ्ग एवं प्रदृश्यते । एवंतपःसुनिरतं ध्यायमानं जनार्दनम् ॥२६॥
वैर्भूयाब्रवीद्देवो वरं वरय मानद । तं च दृष्ट्वा हृषीकेशमङ्गःपरमनिर्वृतः ॥ ३० ॥
तुष्टाव प्रणतो भूत्वा वासुदेवं प्रसन्नधीः ॥ ३१ ॥

अङ्ग उवाच ।

गतिःसर्वभूतानां भूतभावन पावन । भूतात्मा सर्वभूतेश नमस्तुभ्यं गुणात्मने ॥
रूपाय गुह्याय गुणातीताय ते नमः । गुणाय गुणकर्त्रे च गुणाढ्याय गुणात्मने
य भवकर्त्रे च भक्तानां भवहारिणे । भवोद्भवाय गुह्याय नमो भवविनाशिने ॥
य यज्ञरूपाय यज्ञेशाय नमोनमः । यज्ञकर्मप्रसङ्गाय नमःशङ्खधराय च ॥ ३५ ॥
नमो हिरण्याय नमोरथाङ्गधारिणे । सत्याय सत्यभावाय सर्वसत्यमयाय च ॥
र्ताय धर्मकर्त्रे च सर्वकर्त्रे च ते नमः । धर्माङ्गाय सुवीराय धर्माधाराय ते नमः ॥
पुण्याय पुत्राय ह्यपुत्राय महात्मने । मायामोहविनाशाय सर्वमायाकराय ते ॥
धराय मूर्ताय त्वमूर्ताय नमोनमः । सर्वमूर्तिधरायैव शङ्कराय नमोनमः ॥ ३६ ॥
णे ब्रह्मरूपाय परब्रह्मस्वरूपिणे । नमस्ते सर्वधाम्ने च नमोधामधराय च ॥४०॥
ते श्रीनिवासाय श्रीधराय नमोनमः । क्षीरसागरवासाय चामृताय च ते नमः ॥
षधाय घोराय महाप्रज्ञापराय च । अक्रूराय प्रमेध्याय मेध्यानां पतये नमः ॥४२॥
ताय ह्यशेषाय चानघाय नमोनमः । आकाशस्य प्रकाशाय पक्षिरूपाय ते नमः ॥
य हुतभोक्त्रे च हवीरूपाय ते नमः। बुद्धाय बुद्धरूपाय सदाबुद्धाय ते नमः ॥४४॥
हव्याय कव्याय स्वधाकाराय ते नमः । स्वाहाकारायशुद्धाय ह्यव्यक्तायमहात्मने
साय वासवायैव वसुरूपाय ते नमः । वासुदेवाय विश्वाय वह्निरूपाय ते नमः ॥
केवलायैव वामनाय नमोनमः । नमो नृसिंहदेवाय सत्त्वपालाय ते नमः ॥ ४७ ॥
गोविन्दगोपाय नम एकाक्षराय च । नमःसर्वाक्षरायैव हंसरूपाय ते नमः ॥४८॥

त्रितत्त्वाय नमस्तुभ्यं पञ्चतत्त्वाय ते नमः। पञ्चविंशतितत्त्वाय तत्त्वाधाराय
कृष्णाय कृष्णारूपाय लक्ष्मीनाथाय ते नमः। नमःपद्मपलाशाक्ष आनन्दाय
नमोविश्वम्भरायैव पापनाशाय वै नमः। नमःपुण्यसुपुण्याय सत्यधर्माय

नमोनमःशाश्वत अव्ययाय नमोनमःसर्वनभोमयाय।
श्रीपद्मनाभाय महेश्वराय नमामि ते केशव पादपद्मम्॥ ५२॥
आनन्दकन्द कमलाप्रिय वासुदेव सर्वेशईश मधुसूदन देहि दास्यम्।
पादौ नमामि तव केशव जन्मजन्म कृपां कुरुष्व ममशान्तिद शङ्ख
संसारदारुणहुताशनतापदग्धं पुत्रादि बन्धुमरणैर्बहुशोकतापैः।
ज्ञानाम्बुदेन ममप्लावय पद्मनाभ दीनस्य मच्छरणरूप भवस्व नाथ॥

एवं स्तोत्रं समाकर्ण्य त्वङ्गस्यापि महात्मनः। दर्शयित्वा स्वकंरूपंघनश्याम
शङ्खचक्रगदापाणिं पद्महस्तं महाप्रभुम्। वैनतेयसमारूढमात्मरूपं प्रदर्शितम्
सर्वाभरणशोभाङ्गं हारकङ्कणकुण्डलैः। राजमानं परंदिव्यंनिर्मलं वनमाल
अङ्गस्याग्रे हृषीकेशःशोभमानमहत्प्रभः। श्रीवत्साङ्केन पुण्येन कौस्तुभेन
दर्शयित्वा स्वकंदेहं सर्वदेवमयोहरिः। स उवाच महात्मानं तमङ्गमृषि

भोभोविप्र महाभाग श्रूयतां वचनं शुभम्।
मेघगम्भीरघोषेण समाभाष्य द्विजोत्तमम्॥ ६०॥

तपसाऽनेन तुष्टोऽस्मि वरं वरयशोभनम्। तुष्यमाणं हृषीकेशं तंदृष्ट्वाकमल
दीप्यमानं विराजन्तं विश्वरूपं जनेश्वरम्। पादाम्बुजद्वयं तस्य प्रणम्य च पु
हर्षेण महताविष्टस्तमुवाच जनार्दनम्। दासोऽहं तव देवेश शङ्खचक्रगदा
वरंमेदातुकामोऽसिदेहि त्वं वंशजं सुतम्। दिविशक्रो यथाऽऽभातिसर्वतेज
तादृशं देहि मे पुत्रं सर्वलोकस्य रक्षकम्। सर्वदेवप्रियंदेव ब्रह्मण्यं धर्म
दातारं ज्ञानसम्पन्नं धर्मतेजःसमन्वितम्। त्रैलोक्यरक्षकं कृष्णं सत्यधर्मानु
यज्वनामुत्तमंचैकं शूरंत्रैलोक्यभूषणम्। ब्रह्मण्यं वेदविद्वांसं सत्यसन्धंजितें
अजितं सर्वजेतारं विष्णुतेजःसमप्रभम्। वैष्णवं पुण्यकर्तारं पुण्यजं पुण्य

शान्तं तु तपसोपेतं सर्वशास्त्र विशारदम् ।
वेदज्ञं योगिनांश्रेष्ठं भवतो गुणसंनिभम् ॥ ६६ ॥
ईदृशं देहि मे पुत्रं दातुकामो यदा वरम् ।

वासुदेव उवाच ।

णैःसमोपेतस्तवपुत्रो भविष्यति । अत्रिवंशस्यं वै धर्ता विश्वस्यास्य महामते ॥
यशसापुण्यैःपितरं चोद्धरिष्यति । उद्धरिष्यति यःसत्यैःपितरं च पितामहम् ॥
यास्यति मे स्थानं तद्विष्णोःपरमं पदम् । इत्युक्त्वा देवदेवेशस्तमङ्गंप्रतिसद्विज ॥
कस्यचित्पुण्यवीर्यस्य पुण्यां कन्यांविवाहय ।
तस्यामुत्पादय सुतं शुभं पुण्यावहप्रियम् ॥ ७४ ॥
वेष्यतिधर्मात्मामत्प्रसादान्महामते । सर्वज्ञः सर्ववेत्ता च यादृशोवाञ्छितस्त्वया
एवं वरं ततो दत्त्वा अन्तर्धानगतोहरिः ॥ ७५ ॥
इतिश्री पाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने अङ्गवरप्रदानं नाम
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

# त्रयस्त्रिंशोऽध्यायः

## सुनीथाचरित्रम् ।

ऋषय ऊचुः ।

गन्धर्वपुत्रेण सुशङ्खेन महात्मना । तस्य शापात्कथंजाता किं किं कर्मकृतंतया ॥
पि कीदृशं पुत्रं तस्य शापाद्द्विजोत्तम। सुनीथायाश्च चरितं त्वंनो विस्तरतो वद

सूत उवाच ।

नापि तेनैव सा शप्ता तनुमध्यमा । पितुःस्थानं गतासा तु सुनीथादुःखपीडिता
चात्मनश्चैव चरितं च प्रकाशितम् । श्रुतवान्सोऽपिधर्मात्मा मृत्युःसत्यवतांवरः

तामुवाच सुनीथां तु सुतां शप्तां महात्मना ।
भवत्या दुष्कृतं पापं धर्मतेजःप्रणाशनम् ॥ ५ ॥
कस्मात्कृतं महाभागेसुशान्तस्य हि ताडनम् । विरुद्धं सर्वलोकस्यभवत्यापरि
कामक्रोधविहीनं तं सुशान्तं धर्मवत्सलम् । तपोमार्गे विलीनं च परब्रह्मणि
तमेव घातयेद्योवै तस्यपापं शृणुष्व हि । पापात्माजायते पुत्रः किल्विषं
ताडयन्तं ताडयेद्यःक्रोशन्तं क्रोशयेत्पुनः । तस्य पापं स वै भुङ्क्ते ताडितस्य
स वै शान्तो जितात्मा च ताडयन्तं न ताडयेत् ।
निर्दोषं प्रति येनापि ताडनं च कृतं सुते ॥ १० ॥
पश्चान्मोहेन पापेन निर्दोषेऽपि च ताडयेत् । निर्दोषं प्रतियेनापि हृद्रोगः
निर्दोषं ताडयेत्पश्चान्मोहात्पापेनकेनचित् । स पापी पापमाप्नोति निर्दोषस्य
निर्दोषो घातयेत्तंवै ताडन्तं पापचेतसम् । पुनरुत्थाय वेगेन साहसात्पा
पापकर्तुश्च यत्पापं निर्दोषं प्रतिगच्छति । ताडनंनैव तस्माद्वै कार्यंदोषवतं
दुष्कृतं च महत्पुत्रि त्वयैवपरिपालितम् ।
शप्तां तेनापियाद्येव तस्मात्पुण्यं समाचर ॥ १५ ॥
सतां सङ्गं समासाद्य सदैव परिवर्तय । योगध्यानेन ज्ञानेन परिवर्तय नि
सतांसङ्गो महापुण्यो बहुश्रेयो विधायकः। बाले पश्य सुदृष्टान्तं सतां सङ्गस्य
अपांसंस्पर्शनात्पानात्स्नानात्तत्रमहाधियः । मुनयःसिद्धिमायान्तिवाह्याभ्यन्त
आयुष्मन्तो भवन्त्येते लोकाः सर्वे चराचराः ।
आपः शान्ताः सुशीताश्च मृदुगात्राः प्रियङ्कराः ॥ १६ ॥
निर्मला रसवत्यश्च पुण्यवीर्या मलापहाः। तथा सन्तस्त्वयाज्ञेया निषेव्या
यथावह्नि प्रसङ्गाच्च मलंत्यजति काञ्चनम् । तथासतां हिसंसर्गात्पापंत्य
सत्यवह्निःप्रदीप्तश्च प्रज्वलेत्पुण्यतेजसा । सत्येन दीप्ततेजास्तु ज्ञानेनापि
अत्युष्णो ध्यानभावेन अस्पृश्यःपापजैर्नरैः । सत्यवह्नेःप्रसङ्गाच्च पापं सर्वं

तस्मात्सत्यस्य संसर्गःकर्तव्यःसर्वथा त्वया । पापभारं परित्यज्य पुण्यमेव

सूत उवाच ।

एवं पित्रा सुनीथा सा दुःखिता प्रतिबोधिता ।
नमस्कृत्य पितुःपादौ गता सा निर्जनं वनम् ॥ २५ ॥
कामं क्रोधं परित्यज्य बालभावं तपस्विनी ।
मोहद्रोहौ च मायां च त्यक्त्वा एकान्तमास्थिता ॥ २६ ॥
तस्याःसख्यःसमाजग्मू रम्भाद्यास्तास्तपोऽन्विताः ।
तां ददृशुर्विशालाक्ष्यः सुनीथां दुःखभागिनीम् ॥ २७ ॥
ायन्तींचिन्तयानांतामू चुश्चिन्तापरायणाः। कस्माच्चिन्तयसेभद्रेकयावाचिन्तयान्विता
लो वै कारणंब्रू हिचिन्तादुःखप्रदायिनी । एकैव सार्थकाचिन्ताधर्मस्यार्थेविचिन्त्यते
द्वितीया सार्थका चिन्ता योगिनां धर्मनन्दिनी ।
अन्या निरर्थिका चिन्ता तां नैव परिकल्पयेत् ॥ ३० ॥
ायनाशकरी चिन्ता बलतेजःप्रणाशिनी । नाशयेत्सर्वसौख्यं तु रूपहानिं निदर्शयेत्
तृष्णां मोहं तथा लोभमेतांश्चिन्ता हि प्रापयेत् ।
पापमुत्पादयेच्चिन्ता चिन्तिता च दिने दिने ॥ ३२ ॥
न्ताव्याधिप्रकाशाय नरकायप्रकल्पयेत् । तस्माच्चिन्तांपरित्यज्यचानुवर्तस्वशोभने
र्जितं कर्मणापूर्वं स्वयमेवनरेण तु । तदेव भुङ्क्तेऽसौ जन्तुर्ज्ञानवान्नविचिन्तयेत् ॥
माच्चिन्तांपरित्यज्य सुखदुःखादिकं वद । तासांतद्वचनंश्रुत्वासुनीथावाक्यमब्रवीत्

इतिश्री पाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे वेनोपाख्याने
सुनीथाचरितं नाम त्रयस्त्रिंशोऽध्यायः ।

———

# चतुस्त्रिंशोऽध्यायः

## सुनीथयासखीभ्योनिजदुष्कर्मनिरूपणम् ।

सूत उवाच ।

यथा शप्ता वनेपूर्वं सुशङ्खेन महात्मना । तासु सर्वं समाख्यातं सखीष्वेव विचे

आत्मनश्च महाभागा दुःखेनाति प्रपीड़िता ॥ १ ॥

सुनीथोवाच ।

अन्यच्चैव प्रवक्ष्यामि सख्यः शृण्वन्तु साम्प्रतम् ॥ २ ॥

मदीयरूपसम्पत्तिवयःसुगुणसम्पदः । विलोक्य मां पितुश्चिन्तासञ्जाताममका

देवेभ्यो दातुकामोऽसौ मुनिभ्यस्तु महायशाः ।

मां च हस्ते विगृह्यैव सर्वान्वाक्यमुदाहरत् ॥ ४ ॥

गुणयुक्ता सुतावाला ममेयं चारुलोचना । दातुकामोस्मि भद्रं वोगुणिने सुमहा

मृत्योर्वाक्यं ततोदेवा ऋषयः शुश्रुवुस्तदा । तमूचुर्भाषमाणंते देवा इन्द्रपुरोगमा

तवकन्या गुणाढ्येयं शीलानां परमोनिधिः । दोषेणैकेन सन्दुष्टा ऋषिशापेन दु

अस्यामुत्पत्स्यते पुत्रो यस्य वीर्यात्पुमान्किल ।

भविता स महापापी पुण्यवंशविनाशकः ॥ ८ ॥

गङ्गातोयेन सम्पूर्णः कुम्भ एवप्रदूश्यते । सुराया विन्दुनालिप्तो मद्यकुम्भः प्रती

पापस्य पापसंसर्गात्कुलं पापि प्रजायते । आरनालस्य वै विन्दुःक्षीरमध्ये प्र

पश्चान्नाशयते क्षीरमात्मरूपं प्रकाशयेत् । तद्वद्विनाशयेद्वंशं पापःपुत्रो न संशय

अनेनापि हि दोषेण तवेयं पापभागिनी । अन्यस्मै दीयतां गच्छ देवैरुक्तः पि

देवैश्चापि सगन्धर्वैर्ऋषिभिश्च महात्मभिः। तैश्चापि सम्परित्यक्तःपिता मे दुःख

ममान्ये चापि स्वीकारं न कुर्वन्ति हि सज्जनाः ।



एवं पापमयं कर्म मया चैव पुराकृतम् ॥ १४ ॥

ऽसा दुःखशोकेन वनमेव समाश्रिता । तपएव चरिष्यामि करिष्ये कायशोषणम् ॥
खीभिः सुपृष्टाहं कार्यकारण मेव हि । मम चिन्तानुगं कर्म मयातद्वः प्रकाशितम् ॥

एवमुक्त्वा सुनाथा सा मृत्योःकन्या यशस्विनी ।
विरराम च दुःखार्ता किञ्चिन्नोवाच वै पुनः ॥ १७ ॥

सख्य ऊचुः ।

त्रमेव महाभागे त्यंज कायविनाशनम् । नास्ति कस्यकुलेदोषो देवैःपापंसमाश्रितम्
ममुक्तं पुरा तेन ब्राह्मणा हरसन्निधौ । देवैश्चापि सहित्यक्तो ब्रह्मा पूज्यतमोऽभवत्

ब्रह्महत्याप्रयुक्तोऽसौ देवराजोऽपि पुश्य भोः ।
देवैःसार्धं महाभागो भुङ्क्ते लोकत्रयं महान् ॥ २० ॥

मस्य प्रियां भार्यामहल्यां गतवान्पुरा । परदाराभिगामी स देवत्वे परिवर्त्तते ॥
हत्योपमंकर्म दारुणं कृतवान्हरः । ब्रह्मणस्तु कपालेन चाद्यापि परिवर्तते ॥ २२ ॥
नमन्ति तं देवमृषयो वेदपारगाः । आदित्यःकुष्ठसंयुक्तस्त्रैलोक्यं च प्रकाशयेत् ॥
का नमन्ति तं देवं देवाद्याःसचराचराः । कृष्णोभुङ्क्ते महाशापं भार्गवेण कृतंपुरा
भार्यांगतश्चन्द्रःक्षयीतेन प्रजायते । भविष्यति महातेजा राजराजःप्रतापवान् ॥२५॥
डुपुत्रो महाप्राज्ञो धर्मात्मा सयुधिष्ठिरः । गुरोश्चैव वधार्थाय अनृतं स वदिष्यति

एतेष्वेव महत्पापं वर्तते च महत्सु च ।
वैगुण्यं कस्य वै नास्ति कस्य नास्ति च लाञ्छनम् ॥ २७ ॥

ती स्वल्पदोषेण विलिप्तासिवरानने ॥ उपकारं करिष्यामस्तवैव वरवर्णिनि ॥२८॥

तवाङ्गे ये गुणाःसन्ति सत्यस्त्रीणां यथाशुभे ।
अन्यत्रापि न पश्यामस्तान्गुणांश्चारुलोचने ॥ २९ ॥

मेवगुणःस्त्रीणां प्रथमं भूषणं शुभे । शीलमेव द्वितीयं च तृतीयं च सत्यमेव च ॥
र्यवत्वं चतुर्थं च पञ्चमं धर्ममेव हि । मधुरत्वं ततःप्रोक्तं षष्ठमेव वरानने ॥ ३१ ॥
त्वं सप्तमं बाले अन्तर्बाह्येषु योषिताम् । अष्टमं हि पितुर्भावःशुश्रूषा नवमं किल ॥
ष्णुर्दशमंप्रोक्तं रतिश्चैकादश तथा । पातिव्रत्यं ततःप्रोक्तं द्वादश वरवर्णिनि ॥३३॥

तैस्त्वं सम्भूषिता बाले मा बिभेषि वरानने। येनोपायेन ते भर्ता भविष्यति सु
तमुपायं प्रपश्यामस्तवार्थं वयमेव हि। स्वस्थाभव महाभागे मा त्वंवै साहसं

सूत उवाच।

एवमुक्ता सुनीथा सा पुनरूचे सखीस्तु ताः। कथयध्वं ममोपायं येनभर्ता भ
तामूचुस्तावरानार्यो रम्भाद्याश्चारुलोचनाः। रूपमाधुर्यसंयुक्ता भवती भूति
ब्रह्मशापेन सम्भीता वयमत्र समागताः। विद्यामेकां प्रदास्यामःपुरुषाणां प्र
सर्वमायाविदां भद्रे सर्वभद्रप्रदायिनीम्। विद्यावलं ततो दद्युस्तस्यै ताःसु

यं यं मोहयितुं भद्रे इच्छास्येवं सुरादिकम्।
तं तं सद्यो मोहयाव इत्युक्ता सा तथाकरोत्॥ ४०॥
विद्यायां हि सुसिद्धायां सा सुनीथा सुनन्दिता।
भ्रमत्येवं सखीभिस्तु पुरुषान्सा विपश्यति॥ ४१॥

अटमाना गतापुण्यं नन्दनं वनमुत्तमम्। गङ्गातीरे ततोदृष्ट्वा ब्राह्मणंरूपसंत
सर्वलक्षणसम्पन्नं सूर्यतेजःसमप्रभम्। रूपेणाप्रतिमंलोके द्वितीयमिव मन्मथ
देवरूपं महाभागं भाग्यवन्तं सुभाग्यदम्। अनौपम्यं महात्मानं विष्णुतेजःस
वैष्णवं सर्वपापघ्नं विष्णुतुल्यपराक्रमम्। कामक्रोधविहीनं तमत्रिवंशविभूष

दृष्ट्वा सुरूपं तपसां स्वरूपं दिव्यप्रभावं परितप्यमानम्।
पप्रच्छ रम्भां सुसखीं सरागा कोऽयं दिविष्ठः प्रवरो महात्मा॥

इतिश्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने चतुस्त्रिंशोऽध्यायः॥

---

## पञ्चत्रिंशोऽध्यायः

रम्भामुखादङ्गवृत्तं श्रुत्वा तदाश्रये सुनीथायानिश्चयः।

रम्भोवाच।



ब्रह्मा अव्यक्तसम्भूतस्तस्माज्जज्ञे प्रजापतिः। अत्रिर्नाम सधर्मात्मा तस्यपुत्रो

[अत्रि]नाम अयं भद्रे नन्दनं वनमागतः । इन्द्रस्य सम्पदं दृष्ट्वा नानातेजस्समन्विताम्
[त]त्स्पृहा अनेनापि इन्द्रस्य सदृशेपदे । ईदृशो हि यदापुत्रो ममस्याद्धर्मसंयुतः ॥३॥
[श्र]येो मे भवेज्जन्म यशःकीर्ति समन्वितम् । आराधितो हृषीकेशस्तपोभिर्नियमैस्तथा
[प्र]सन्ने हृषीकेशे वरं याचितवानयम् । इन्द्रस्य सदृशंपुत्रं विष्णुतेजःपराक्रमम् ॥५॥
[सर्व]णवं सर्वपापघ्नं देहिमे मधुसूदन । दत्तवान्स तदा पुत्रमीदृशं सर्वधारकम् ॥ ६ ॥
[तत]प्रभृति विप्रेन्द्रःपुण्यां कन्यां प्रपश्यति । यथा त्वं चारुसर्वाङ्गी तथा यं परिपश्यति
[तं] गच्छ वरारोहे अस्मात्पुत्रो भविष्यति । पुण्यात्मा पुण्यधर्मज्ञो विष्णुतेजःपराक्रमः
[ए]त्ते सर्वमाख्यातं यथाहं पृच्छिता त्वया । अयंभर्ता भवत्यर्थे भवेदेव न संशयः ॥९॥

सुशङ्खस्यापि यःशापो वृथा सोऽपि भविष्यति ।
अस्माज्जाते महाभागे पुत्रे धर्म प्रचारिणि ॥ १० ॥

[भ]विष्यसि सुखी भद्रे सत्यंसत्यं वदाम्यहम् । सुक्षेत्रे कृषिकारस्तु वीजंवपति तत्परः
[य]तथा भुञ्जते देवि यथावीजं तथाफलम् । अन्यथानैव जायेत तत्सर्वं सदृशं भवेत् ॥
[विप्र]मेष महाभागस्तपस्वी पुण्यवीर्यवान् । अस्य वीर्यात्समुत्पन्नो अस्यैव गुणसम्पदा
[तव]ःपुत्रो महातेजाःसर्वदेहभृतांवरः । भविष्यति महाभाग्यो शुक्तात्मा योगतत्त्ववित्

एवं हि वाक्यं तु निशम्य बाला रम्भाप्रियोक्तं शिवदायकं तत् ।
विचिन्त्यबुद्ध्येह सुनीथया तदा तत्त्वार्थमेतत्परिसत्यमेव हि ॥ १५ ॥

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने पञ्चत्रिंशोऽध्यायः ॥३५॥

---

## षट्त्रिंशोऽध्यायः

### सुनीथयागानप्रभावादङ्गवशीकरणम् ।

सुनीथोवाच ।

[य]मुक्तं त्वया भद्रे एवमेतत्करोम्यहम् । अनयाविद्यया विप्र मोहयिष्यामि नान्यथा

साहाय्यं देहि मे पुण्यं येन गच्छामि साम्प्रतम् ।
एवमुक्ता तया रम्भा तामुवाच मनस्विनीम् ॥ २ ॥
कीदृग्ददामि साहाय्यं तत्त्वं कथय भामिनि । दूतत्वं गच्छमे भद्रे एतंप्रति
एवमुक्तं तया तां तु रम्भांप्रति सुलोचनाम् । एवमेव प्रतिज्ञातं रम्भयादेवयो
करिष्ये तव साहाय्यमादेशो मम दीयताम् । सद्भावेन विशालाक्षी रूपयौव
मायया दिव्यरूपा सा सम्बभूव वरानना । रूपेणाप्रतिमालोके मोहयन्ती ज
मेरोश्चैव महापुण्ये शिखरे चारुकन्दरे । नानाधातुसमाकीर्णे नानरत्नोप
देववृक्षैःसमाकीर्णे बहुपुष्पोपशोभिते । देववृन्दसमाकीर्णे गन्धर्वाप्सरसे
मनोहरे सुरम्ये च शीतच्छायासमाकुले । चन्दनानामशोकानां तरूणां
दोलायां सा समारूढा सर्वश्रृङ्गारशोभिता । कौशेयेन सुनीलेन राजमाना
बन्धूकपुष्पवर्णेन कञ्चुकेन द्विजोत्तमाः । सर्वाङ्गसुन्दरी बाला वीणाताल
गायमाना वरंगीतं सुस्वरं विश्वमोहनम् । ताभिःपरिवृताबाला सखीभिःसुन्नि
अङ्गस्तु कन्दरे पुण्ये एकान्ते ध्यानमास्थितः ।
कामक्रोधविहीनस्तु ध्यायमानो जनार्दनम् ॥ १३ ॥
स श्रुत्वा सुस्वरंगीतं मधुरं सुमनोहरम् । तालमानक्रियोपेतं सर्वसत्त्वविकर्ष
ध्यानाच्चचाल तेजस्वी मायागीतेन मोहितः । समुत्थायासनात्तूर्णं वीक्षमा
जगाम तत्रवेगेन मायाचलित मानसः । दोलासंस्थां विलोक्यैव वीणादण्ड
हसमानां सुगायन्तीं पूर्णचन्द्रनिभाननाम् । मोहितस्तेन गीतेन रूपेणा
तस्यालावण्यभावेन मन्मथस्य शराहतः । आकुलव्याकुलज्ञानऋषिपुत्रो
प्रलपत्यतिमोहेन जृम्भते च पुनः पुनः ।
स्वेदःकम्पोऽथ सन्तापस्तस्याजायत तत्क्षणात् ॥ १६ ॥
मुह्यन्निव महामोहैर्ग्लानश्चलितमानसः । वेपमानस्ततस्त्वङ्गो दूयमानःसम
तामालोक्य विशालाक्षीं मृत्युकन्यां यशस्विनीम् ।

अथोवाच महात्मास सुनीथां चारुहासिनीम् ॥ २१ ॥

ा त्वं कस्य वरारोहे सखीभिःपरिवारिता। केनकार्येण सम्प्राप्ता केनत्वं प्रेषितावनम्
वाङ्गं सुन्दरं सर्वमनभाति महावने। समाचक्ष्व ममाद्यैव प्रसादसुमुखीभव ॥२३॥
ायामोहेन सम्मुग्धास्तस्याःकर्म न विन्दति। मार्गणैर्मन्मथस्यापि परिविद्धोमहामुनिः

एवंविधं महद्वाक्यं समाकर्ण्य महामतेः।
नोवाच किञ्चित्सा विप्रं समालोक्य सखीमुखम् ॥ २५ ॥

म्भां च प्रेरयामास सुनीथां संज्ञया सखीम्। समुवाच ततो रम्भा सादरं तं द्विजंप्रति

इयंकन्या महाभागा मृत्योश्चापि महात्मनः।
सुनीथाख्या प्रसिद्धेयं सर्वलक्षणसम्पदा ॥ २७ ॥

तिमन्विच्छतींबालां धर्मवन्तं तपोनिधिम्। शान्तं दान्तं महाप्राज्ञं वेदविद्याविशारदम्
वंविधं महद्वाक्यं समाकर्ण्य महामुनिः। तामुवाच ततस्त्वङ्गो रम्भामप्सरसांवराम्
या चाराधितो विष्णुःसर्वविश्वमयो हरिः। तेन दत्तो वरोमह्यं पुत्राख्यःसर्वसिद्धिदः
न्निमित्तमहं भद्रे सुतार्थं नित्यमेव च। कस्यचित्पुण्यवीर्यस्य कन्यामेकां प्रचिन्तये
दैवाहं न पश्यामि सुभार्यां सत्यमीदृशीम्। इयंधर्मस्य वै कन्या धर्माचारा वरानना
मेवं हि भजत्वेषा यदि कान्तमिहेच्छति। यं यमिच्छेदियंबाला तं ददामि न संशयः
देयं देयमित्याह अस्याःसङ्गमकारणात्। एकमेव त्वयादेयं रम्भोवाच द्विजोत्तमम् ॥

विप्रेन्द्र त्वं शृणुष्वेह प्रतिज्ञांवच्मि साम्प्रतम्।
एषानैव त्वया त्याज्या धर्मपत्नी तवैव हि ॥ ३५ ॥

स्यादोषो गुणोनैव ग्राह्य एवत्वया कदा। इत्यर्थे प्रत्ययं विप्र प्रत्यक्षं परिदर्शय ॥
हस्तं देहि विप्रेन्द्र सत्यप्रत्ययकारकम्। एवमस्तु मयादत्तो ह्यस्याहस्तो न संशयः

सूत उवाच।

संबन्धकं कृत्वा सत्यप्रत्ययकारकम्। गान्धर्वेण विवाहेन सुनीथामुपयेमिवान् ॥
मैदत्वा सुनीथां तां रम्भा हृष्टेनचेतसा। सा तां चामन्त्रयित्वा वै गतागेहं स्वकंपुनः
ष्टचेतसःसख्यःस्वस्थानं परिजग्मिरे। गतासु तासु सर्वासु सखीषु द्विजसत्तमः ॥
त्वङ्गस्तयासार्धं प्रियया भार्यया सह। तस्यामुत्पाद्य तनयं सर्वलक्षणसंयुतम् ॥

चकार नामतस्यैव वेनाख्यं तनयस्य हि । ववृधे समह तेजाःसुनीथातनयस्त
वेदशास्त्रमधीत्यैव धनुर्वेदं गुणान्वितम् । सर्वासामपि मेधावी विद्यानां पा
अङ्गस्य तनयोवेनःशिष्टाचारेणवर्तते । स वेनो ब्राह्मणश्रेष्ठःक्षत्राचारपरो
दिविचेन्द्रो यथाभाति सर्वतेजःसमन्वितः । भात्येवं तु महाप्राज्ञःस्वबलेन प
चाक्षुषस्यान्तरैप्राप्ते वैवस्वतसमागते । प्रजापालं विनालोके प्रजाःसीदन्ति

ऋषयो धर्मतत्त्वज्ञाःप्रजाहेतोस्तपोधनाः ।
व्यचिन्तयन्महीपालं धर्मज्ञं सत्यपण्डितम् ॥ ४७ ॥

तंवेनमेव ददृशुःसम्पन्नं लक्षणैर्युतम् । प्राजापत्ये पदेपुण्ये अभ्यषिञ्चन्द्वि
अभिषिक्ते महाभागे त्वङ्गपुत्रे तदा नृपे । ते प्रजापतयःसर्वे जग्मुश्चैव तपोव

गतेषु तेषु सर्वेषु वेनो राज्यमकारयत् ।
सा सुनीथा सुतंदृष्ट्वा सर्वराज्यप्रसाधकम् ॥ ५० ॥

विशङ्कते प्रभावेण शापात्तस्य महात्मनः । ममपुत्रो महाभागो धर्मत्राता भ
इत्येवं चिन्तयेन्नित्यं पूर्वपापाद्विशङ्किता । धर्माङ्गानि सुपुण्यानि सुताग्रे प

सत्यभावादिकान्पुण्यान्गुणान्सा वै प्रकाशयेत् ।
इत्युवाच सुतं सा हि अहं धर्मसुता सुत ॥ ५३ ॥

पिता ते धर्मतत्त्वज्ञस्तस्माद्धर्मं समाचर । इत्येवं बोधयेन्नित्यं पुत्रंवेनं तद
मातापित्रोस्तयोर्वाक्यं प्रजायुक्तं प्रपालयेत् । एवंवेनःप्रजापालःसञ्जातःक्षिति
सुखेन जीवते लोकःप्रजाधर्मेण रञ्जिताः । एवं राज्यप्रभावं तु वेनस्या प्र

धर्मभावाःप्रवर्तन्ते तस्मिञ्छासति पार्थिवे ॥ ५७ ॥

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने षट्त्रिंशोऽध्यायः ॥

---

# सप्तत्रिंशोऽध्यायः

## वेनस्य छन्नलिङ्गधारिणापुरुषेणसह संवादः ।

ऋषयऊचुः ।

ेनस्य चैवासीत्सृष्टिरेव महात्मनः । धर्माचारं परित्यज्य कथं पापमतिर्भवेत् ॥

सूतउवाच ।

ःविज्ञानसंपन्ना मुनयस्तत्त्ववेदिनः । शुभाशुभं वदन्त्येवं तन्नस्यादिह चान्यथा ॥२॥

मानेन तेनापि सुशङ्खेन महात्मना । दत्तःशापःकथं विप्रा न यथावच्चजायते ॥

य पातकाचारं सर्वमेव वदाम्यहम् । तस्मिञ्छासति धर्मज्ञे प्रजापाले महात्मनि

ः कश्चिदायातश्छद्मलिङ्गधरस्तदा । नग्नरूपो महाकायः शिरोमुण्डो महाप्रभः ॥

मार्जनी शिखिपत्राणां कक्षायां स हि धारयन् ।
गृहीतं पानपात्रं तु नालिकेरमयंकरे ॥ ६ ॥

नोह्यसच्छास्त्रं वेदधर्मविदूषकम् । यत्र वेनोमहाराजस्तत्रायातस्त्वरान्वितः ॥

सभायां तस्य वेनस्य प्रविवेश स पापवान् ।
तं दृष्ट्वा समनुप्राप्तं वेनः प्रश्नं तदाऽकरोत् ॥ ८ ॥

को हि समायात ईदृग्रूपधरो मम । सभायां वर्तमानस्य पुरः कस्मात्समागतः

को वेषः किन्तु ते नाम को धर्मः कर्म ते वद ।
को वेदस्ते कः आचारः किंतपः का प्रभावना ॥ १० ॥

ानं कःप्रभावस्ते किं सत्यंधर्मलक्षणम् । तत्त्वं सर्वं समाचक्ष्व ममाग्रेसत्यमेव च

वेनस्य तद्वाक्यं पापो वाक्यमुदाहरत् । करोष्येवं वृथा राज्यंमहामूढो नसंशयः

र्मस्यसर्वस्वमहंपूज्यतमस्सुरैः । अहं ज्ञानमहंसत्यमहं धाता सनातनः ॥ १३ ॥

र्म अहं मोक्षः सर्वदेवमयो ह्यहम् । ब्रह्मदेहात्समुद्भूतः सत्यसन्धोऽस्मिनान्यथा

पं विजानीहि सत्यधर्मकलेवरम् । मामेव हि प्रधावन्ति योगिनो ज्ञानतत्पराः ॥

वेन उवाच ।

तवैव कीदृशं कर्म किं ते दर्शनमेव च । किमाचारो वदस्वैहि इत्युक्तं तेन

पातक उवाच ।

अर्हन्तो देवता यत्र निर्ग्रन्थो दृश्यते गुरुः । दयाचैव परोधर्मस्तत्र मोक्षः

दर्शनेऽस्मिन्नसन्देह आचारान्प्रवदाम्यहम् । यजनं याजनं नास्ति वेदाध्ययन

नास्ति सन्ध्या तपो दानं स्वधास्वाहाविवर्जितम् ।

हव्यकव्यादिकं नास्ति नैव यज्ञादिकाक्रिया ॥ १६ ॥

पितृणां तर्पणं नास्ति नातिथिर्वैश्वदेविकम् । क्षपणस्य वरापूजा अर्हतो ध

अयं धर्मसमाचारो जैनमार्गे प्रदृश्यते । एतत्ते सर्वमाख्यातं निजधर्मस्य

वेन उवाच ।

वेदप्रोक्तो यथा धर्मो यत्र यज्ञादिकाःक्रियाः । पितृणां तर्पणं श्राद्धं वैश्वदे

न दानं तप एवास्ति क्वास्ते धर्मस्यलक्षणम् । वद सत्यं ममाग्रे तु दयाधर्म

पातक उवाच ।

पञ्चतत्त्वप्रवृद्धोऽयं प्राणिनां काय एव च । आत्मावायुस्वरूपोऽयंतेषांनामि

यथा जलेषु भूतानामपि सङ्गमवेहि तत् । जायते बुद्बुदाकारं तद्वद्भूत

पृथ्वीभावो रजःस्थस्तु चापस्तत्रैव संस्थिताः । ज्योतिस्तत्र प्रदृश्येतसुवायु

आकाशमावृणोत्पश्चाद्बुद्बुदत्वं प्रजायते । अप्सु मध्ये प्रभात्येव सुतेजो

क्षणमात्रं प्रदृश्येत क्षणान्नैव च दृश्यते । तद्वद्भूतसमायोगः सर्वत्र

अन्तकाले प्रयात्यात्मा पञ्चपञ्चसुयान्तिते । मोहमुग्धास्ततो मर्त्या वर्तन्ते

श्राद्धंकुर्वन्ति मोहेन क्षयाहे पितृतर्पणम् । क्वास्तेमृतःसमश्नातिकीदृशोऽ

किंज्ञानं कीदृशं कार्यं केनदृष्टं वदस्व नः ।

मिष्टान्नं भोजयित्वा च तृप्तायान्ति च ब्राह्मणाः ॥ ३१ ॥

कस्य श्राद्धं प्रदीयेत सा तु श्रद्धा निरर्थिका । अन्यदेवं प्रवक्ष्यामि वेदानां



यदाऽतिथिर्गृहे याति महोक्षं पचते द्विजः । अजं वा राजराजेन्द्र अतिथि

श्वमेधमखे अश्वं गोमेधे वृषमेव च । नरमेधेनरं राजन्वाजपेये तथाह्यजान् ॥ ३४ ॥
जसूये महाराज प्राणिनां घातनं बहु । पुण्डरीके गजंहन्याद्गजमेधेऽथ कुञ्जरम् ॥
त्रामण्यां पशुं मेध्यं मेषमेव प्रदृश्यते । नानारूपेषु सर्वेषु श्रूयतांनृपनन्दनः ॥

नानाजातिविशेषाणां पशूनां घातनं स्मृतम् ।
यच्चापि दीयते दानं किंतद्दानस्य लक्षणम् ॥ ३७ ॥

यं तदन्नमुच्छिष्टं क्रियते भूरिभोजनम् । अत्यन्तदोषहीनांस्तान्हिंसन्ति यन्महामखे
त्र किं दृश्यते धर्मः किं फलं तत्र भूपते । पशूनां मारणं यत्र निर्दिष्टंवेदपण्डितैः ॥
स्माद्विनष्टधर्मं च न पुण्यं मोक्षदायकम् । दयांविना हि योधर्मः स धर्मोविफलायते
वानां पालनं यत्र तत्र धर्मो न संशयः । स्वाहाकारः स्वधाकारस्तपःसत्यं नृपोत्तमः

दयाहीनं चापलं स्यान्नास्ति धर्मस्तु तत्र हि ।
एते वेदा न वेदास्युः दया यत्र न विद्यते ॥ ४२ ॥

दानपरो नित्यं जीवमेव प्ररक्षयेत् । चाण्डालोऽप्यथशूद्रो वा स वै ब्राह्मणउच्यते
ह्मणो निर्दयो योवै पशुघातपरायणः । स वै सुनिर्दयः पापे कठिनः क्रूरचेतनः ॥
कैः कथितो वेदो योवेदो ज्ञानवर्जितः । यत्र ज्ञानं भवेन्नित्यं तत्र वेदः प्रतिष्ठते ॥
हीनेषु वेदेषु विप्रेषु च महामते । नास्ति सत्यं क्रिया तत्र वेदविप्रेषु वै तदा ॥

वेदा न वेदा राजेन्द्र ब्राह्मणाः सत्यवर्जिताः ।
दानस्यापि फलं नास्ति तस्माद्दानं न दीयते ॥ ४७ ॥
यथा श्राद्धस्य वै चिह्नं तथा दानस्य लक्षणम् ।
जिनस्यापि च यद्धर्मं भुक्तिमुक्तिप्रदायकम् ॥ ४८ ॥

ग्रेऽहं प्रवक्ष्यामि बहुपुण्यप्रदायकम् । आदौ दया प्रकर्तव्या शान्तभूतेन चेतसा ॥
राधयेद्धूतादेवं जितं येन चराचरम् । मनसा शुद्धभावेन जिनमेकं प्रपूजयेत् ॥

नमस्कारः प्रकर्तव्यस्तस्य देवस्य नान्यथा ।
माता पित्रोस्तु वै पादौ कदा नैव प्रवन्दयेत् ॥ ५१ ॥
अन्येषामपि का वार्ता श्रूयतां राजसत्तम ॥ ५२ ॥

वेन उवाच ।

एते विप्राश्च आचार्या गङ्गाद्याः सरितस्तथा । वदन्ति पुण्यतीर्थानि बहुपुण्
तत्किं वदस्व सत्यं मे यदि धर्ममिहेच्छसि ॥ ५३ ॥

पातक उवाच ।

आकाशाद्वै महाराज मेघा वर्षन्ति वै जलम् । भूमौ हि पर्वतेष्वेवं सर्वत्र प
सआप्लाव्य ततस्तिष्ठेद्यां सर्वत्र भावयेत् । नद्यः पापप्रवाहास्तुतासुतीर्थं
जलाशया महाराज तडागाः सागरास्तथा । पृथिव्या धारकाश्चैव गिरयो
नास्त्येतेषु च वै तीर्थं जलैर्जलदमुत्तमम् । स्नाने यदा महत्पुण्यं कस्मान्मत्
दृष्टास्नानेन वै सिद्धिर्मीनाः शुद्ध्यन्तिनान्यथा । यत्र जिनस्तत्र तीर्थं तत्र धर्मः
तपोदानादिकं सर्वं पुण्यं तत्र प्रतिष्ठितम् ॥ ५६ ॥
एको जिनः सर्वमयो नृपेन्द्र नास्त्येव धर्मं परमं हि तीर्थम् ।
अयं तु लाभः परमस्तु तस्माद्ध्यायस्व नित्यं सुसुखो भविष्यसि
विनिन्द्य धर्मं सकलं सवेदं दानं सपुण्यं परयज्ञरूपम् ।
पापस्वभावैर्बहुबोधितो नृपस्त्वङ्गस्य पुत्रो भुवि तेन पापिना ॥

इति श्रीपाद्मपुराणे पञ्चपञ्चाशत्सहस्रसंहितायां द्वितीये भूमिखण्डे वे
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः

### वेनस्यवैदिकधर्मकर्मपरित्यागः ।

सूत उवाच ।

एवं सम्बोधितो वेनः पापभावं गतः किल । पुरुषेण तेन जैनेन महापापेन

नमस्कृत्य ततः पादौ तस्यैव च दुरात्मनः । वेदधर्मं परित्यज्य सत्यधर्मादि

सुयज्ञानां निवृत्तिः स्याद्वेदानां हि तथैव च ।
पुण्यशास्त्रमयो धर्मस्तदा नैव प्रवर्तितः ॥ ३ ॥
पापमयो लोकः सञ्जातस्तस्यशासनात् । नैवयागाश्च वेदाश्च धर्मशास्त्रार्थमुत्तमम्
दानाध्ययनं विप्रास्तस्मिञ्छासति पार्थिवे । एवं धर्मप्रलोपोऽभून्महत्पापं प्रवर्तितम्
न वार्यमाणस्तु अन्यथा कुरुते भृशम् । न ननाम पितुः पादौ मातुश्चैव दुरात्मवान्
सनकस्यापिविप्रस्य अहमेकः प्रतापवान् ।
पित्रा निवार्यमाणश्च मात्राचैव दुरात्मवान् ॥ ७ ॥
करोति शुभं पुण्यं तीर्थदानादिकं कदा । आत्मभावानुरूपं च बहुकालं महायशाः ॥
ः सर्वैर्विचार्यैवं कस्मात्पापी व्यजायत । अङ्गप्रजापतेः पुत्रो वंशलाञ्छनमागतः ॥
ःपप्रच्छ धर्मात्मा सुतां मृत्योर्महात्मनः । कस्यदोषात्समुत्पन्नो वद सत्यं ममप्रिये

सुनीथोवाच ।

मेव स्ववृत्तान्तमात्मपुण्यं च नन्दिनी । समाचष्ट च अङ्गाय मम दोषान्महामते ॥
येकृतं मयापापं सुशङ्खस्यमहात्मनः । तपसिसंस्थितस्यापि नान्यत्किञ्चित्कृतंमया
ाहं कुप्यता तेन दुष्टा ते सन्ततिर्भवेत् । इति जाने महाभाग तेनायं दुष्टतां गतः ॥
समाकर्ण्य महातेजास्तयासह वनं ययौ ।
गते तस्मिन्महाभागे सभार्ये च वने तदा ॥ १४ ॥
ते ऋषयस्तत्र वेनपार्श्वं गतास्तथा । समाहूय ततः प्रोचुरङ्गस्य तनयं प्रति ॥१५॥
वेनसाहसं कार्षीः प्रजापालोभवानिह । त्वयासर्वमिदं लोकं त्रैलोक्यं सचराचरम्
चैव महाभाग सकलं हि प्रतिष्ठितम् । पापकर्म परित्यज्य पुण्यं कर्म समाचर ॥
मुक्तेषु तेष्वेव प्रहसन्वाक्यमब्रवीत् । अहमेवपरो धर्मोऽहमेवार्हः सनातनः ॥ १८ ॥
धाता अहं गोप्ता अहं वेदार्थ एव च । अहं धर्मो महापुण्यो जैनधर्मः सनातनः ॥
मामेव कर्मणा विप्रा भजध्वं धर्मरूपिणम् ॥ २० ॥

ऋषय ऊचुः

णाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः । सर्वेषामेव वर्णानां श्रुतिरेषासनातनी

वेदाचारेण वर्तन्ते तेन जीवन्ति जन्तवः। ब्रह्मवंशात्समुद्भूतो भवान्ब्राह्मण
पश्चाद्राजा पृथिव्याश्च सञ्जातः कृतविक्रमः।
राजपुण्येन राजेन्द्र सुखं जीवन्ति वै द्विजाः॥ २३॥
राज्ञः पापेन नश्यन्ति तस्मात्पुण्यं समाचर। समाकृतस्त्वया धर्मः कृतश्चापि
त्रेतायुगस्य कर्मापि द्वापरस्य तथा नहि। कलेश्चैव प्रवेशं तु वर्त्तयिष्यन्ति
जैनधर्मं समाश्रित्य सर्वे पापप्रमोहिताः। वेदाचारं परित्यज्य पापं यास्यन्ति
पापस्य मूलमेवं वै जैनधर्मो न संशयः। अनेन मुग्धा राजेन्द्र महामोहेन पा
मानवाः पापसङ्घातास्तेषां नाशाय नान्यथा।
भविष्यत्येव गोविन्दः सर्वपापापहारकः॥ २८॥
स्वेच्छारूपं समासाद्य संहरिष्यति पातकात्। पापेषु सङ्गतेष्वेवं म्लेच्छनाशा
कल्किरेव स्वयं देवो भविष्यति न संशयः॥ २९॥
व्यवहारं कलेश्चैव त्यज पुण्यं समाश्रय। वर्तयस्व हि सत्येन प्रजापालो भव

वेन उवाच।

अहं ज्ञानवतां श्रेष्ठः सर्वं ज्ञातं मया इह। योऽन्यथा वर्तते चैव स दण्ड्यो भव
अत्यर्थं भाषमाणं तं राजानं पापचेतनम्। कुपितास्ते महात्मानः सर्वे वै ब्रह्
कुपितेष्वेव विप्रेषु वेनो राजा महात्मसु।
ब्रह्मशापभयात्तेषां वल्मीकं प्रविवेश ह॥ ३३॥
अथ ते मुनयः क्रुद्धा वेनं पश्यन्तिसर्वतः। ज्ञात्वा प्रनष्टं भूपं तं वल्मीकस्थं सु
बलादानिन्युस्तं विप्राः क्रूरं तं पापचेतनम्। दृष्ट्वा च पापकर्माणं मुनयःसुस
सव्यं पाणिं ममन्थुस्ते भूपस्य जातमन्यवः।
तस्माज्जातो महाह्रस्वो नीलवर्णो भयङ्करः॥ ३६॥
बर्बरो रक्तनेत्रस्तु बाणपाणिर्धनुर्द्धरः। सर्वेषामेव पापानां निषादानां बभूव
धाता पालयिता राजा म्लेच्छानां तु विशेषतः। तं दृष्ट्वा पापकर्माणमृषयस्
ममन्थुर्दक्षिणंपाणिं वेनस्यापिमहात्मनः। तस्माज्जातोमहात्मा स येन दुग्धा

[न]ाम महाप्राज्ञो राजराजोमहाबलः । तस्य पुण्यप्रसादाच्च वेनो धर्मार्थक[ो]विदः ॥
[च]क्रवर्तिपदं भुक्त्वा प्रसादात्तस्य चक्रिणः । जगाम वैष्णवं लोकं तद्विष्णोःपरमंपदम् ॥

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्यानेऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

## ऊनचत्वारिंशोऽध्यायः

### रेवातीरे वेनस्यतपस्याकरणम् ।

ऋषय ऊचुः ।

[कथ]ं वेनो गतः स्वर्गं पापंत्यक्त्वा प्रदूरतः। तन्नो विस्तरतोऽत्रापि वद सत्यवतां वर ॥

सूत उवाच ।

[ऋष]ीणांपुण्यसंसर्गात्संवादाच्चद्विजोत्तमाः । कायस्यमथनात्पापोवहिस्तस्यविनिर्गतः
पश्चाद्वेनः स पुण्यात्मा ज्ञानं लेभे च शाश्वतम् ।
रेवाया दक्षिणे कूले तपश्चार स द्विजाः ॥ ३ ॥
[तृण]ाविन्दोर्ऋषेश्चैव आश्रमे पापनाशने । वर्षाणां तु शतं साग्रं कामक्रोधविवर्जितः ॥
[तस्]याग्रतपसा देवः शङ्खचक्रगदाधरः । प्रसन्नोऽभून्महाभागो निष्पापस्य नृपस्य वै ॥
उवाच च प्रसन्नोऽस्मि व्रियतां वर उत्तमः ॥ ५ ॥

वेन उवाच ।

यदि देव प्रसन्नोऽसि देहि मे वरमुत्तमम् ।
अनेनापि शरीरेण गन्तुमिच्छामि त्वत्पदम् ॥ ६ ॥
[पि]त्रासार्धं महाभाग मात्रा चैव सुरेश्वर । तवैव तेजसा देव तद्विष्णोः परमं पदम् ॥

श्रीवासुदेव उवाच ।

क्व गतोऽसौ महामोहो येन त्वं मोहितोनृप ।
लोभेनमोहयुक्तेन तमोमार्गे निपातितः ॥ ८ ॥

वेन उवाच ।

यन्मे पूर्वकृतं पापं तेनाहं मोहितो विभो । अतो मामुद्धरास्मात्त्वं पापाच्चैव
प्रजप्तव्यमथो पाठ्यं तद्वदानुग्रहाद्विभो ॥ १० ॥

भगवानुवाच ।

साधु भूप महाभाग पापं ते नाशमागतम् ।
शुद्धोऽसि तपसा च त्वं ततः पुण्यं वदाम्यहम् ॥ ११ ॥

पुरा वै ब्रह्मणा तात पृष्टोऽहं भवता यथा । तस्मै यदुदितं वत्स तत्ते सर्वं
एकदा ब्रह्मणा ध्यानस्थितेन नाभिपङ्कजे । प्रादुरास तदा तस्य वरदानाय
तेन पृष्टं महत्पुण्यं स्तोत्रं पापप्रणाशनम् । वासुदेवाभिधानं च सुगतिप्रद
स्तोत्राणां परमं तस्मै वासुदेवाभिधं महत् । सर्वसौख्यप्रदं नृणां पठतां जप
उपादिशं महाभाग विष्णुप्रीतिकरं परम् ॥ १५ ॥

विष्णुरुवाच ।

एतत्सर्वं जगद्व्याप्तं मया त्वव्यक्तमूर्तिना । अतो मां मुनयः प्राहुर्विष्णुं विष्णु
वसन्ति यत्र भूतानि वसत्येषु च यो विभुः । स वासुदेवो विज्ञेयो विद्व
सङ्कर्षति प्रजाश्चान्ते ह्यव्यक्ताय यतो विभुः । ततः सङ्कर्षणो नाम्ना विज्ञेयः
इङ्गिते कामरूपोऽहं बहुस्यामिति काम्यया ।
प्रद्युम्नोऽहं बुधैस्तस्माद्विज्ञेयोऽस्मि सुदार्थिभिः ॥ १८ ॥

अत्र लोके विनाचेशौ सर्वेशौ हरकेशवौ । निरुद्धोऽहं योगबलान्नकेनातोऽनि
विश्वाख्योऽहं प्रतिजगज्ज्ञानविज्ञानसंयुतः । अहमित्यभिमानी च जाग्रच्चिन्ता
तैजसोऽहं जगच्चेष्टामयश्चेन्द्रियरूपवान् । ज्ञानकर्मसमुद्रिक्तः स्वप्नावस्थां ग
प्राज्ञोऽहमधिदैवात्मा विश्वाधिष्ठानगोचरः ।
सुषुप्तावास्थितो लोकादुदासीनो विकल्पितः ॥ २३ ॥

तुरीयोऽहं निर्विकारी गुणावस्थाविवर्जितः । निर्लिप्तः साक्षिवद्विश्वप्रतिबि
चिदाभासश्चिदानन्दश्चिन्मयश्चित्स्वरूपवान् ।

नित्योऽक्षरो ब्रह्मरूपो ब्रह्मन्नेवमवेहि माम् ॥ २५ ॥

भगवानुवाच ।

इत्युक्त्वाऽन्तर्दधे विष्णुः स्वरूपं ब्रह्मणे पुरा ।
सोऽपि ज्ञात्वा जगद्व्याप्तिं कृतात्मा समभूत्क्षणात् ॥ २६ ॥

स्त्वमपि शुद्धात्मा पृथोर्जन्मन एव च । तथाप्याराधय विभुं स्तोत्रेणानेन सुव्रत
तुष्टो विष्णुस्तमभ्याह वरं वरय मानद ॥ २८ ॥

वेन उवाच ।

सुगतिं देहि मे विष्णो दुष्कृतात्तारयस्व माम् ।
शरणं त्वां प्रपन्नोऽस्मि कारणं वद सन्नतेः ॥ २९ ॥

विष्णुरुवाच ।

व महाभाग त्वङ्गेनापि महात्मना । अहमाराधितस्तेन तस्मै दत्तो वरो मया ॥
स्यसि महाभाग वैष्णवं लोकमुत्तमम् । कर्मणा स्वेन विप्रेन्द्र पुण्येन नृपनन्दन ॥
र्थे त्वं महाभाग वरमेव प्रयाचय । शृणु वेन महाभाग वृत्तान्तं पूर्वसम्भवम् ॥
त्रे पुरा दत्तः शापः क्रुद्धेन भूपते । सुशङ्खेन सुनीथायै बाल्ये पूर्वं महात्मना ॥
त्वङ्गे वरो दत्तो मयैव विदितात्मना । त्वां समुद्धर्त्तुकामेन सुपुत्रस्ते भविष्यति ॥
कृत्वा तु पितरं तवाहं गुणवत्सल । भवदङ्गात्समुद्भूतः करिष्ये लोकपालनम् ॥
दिवीन्द्रो हि यथा भाति तथाहं भूतलेस्थितः ।
आत्मा वै जायते पुत्र इति सत्यवती श्रुतिः ॥ ३६ ॥

त्वं सुगतिं वत्स लभिष्यसि वरान्मम । गत्यर्थमात्मनो राजन्दानमेकं समाचर ॥
गं पातकरूपोऽहं सुनीथायाः परन्तप । अभुवं नग्नरूपेण कर्तुं त्वां तु विधर्मगम्
या तु सुशङ्खस्य वाक्यमेवान्यथा भवेत् । अतो विधिर्निषेधश्च ह्यहमेव नृपोत्तम
रूपफलदो बुद्ध्यतीतो गुणाग्रहः । दानमेव परं श्रेष्ठं दानं सर्वप्रभावकम् ॥ ४० ॥
दानं ददस्व त्वं दानात्पुण्यं प्रवर्तते । दानेन नश्यते पापं तस्माद्दानं ददस्व हि ॥
धादिभिर्यज्ञैर्यजस्व नरसत्तम । भूमिदानादिकं दानं ब्राह्मणेभ्यो ददस्व वै ॥४२॥

सुदानात्प्राप्यते भोगः सुदानात्प्राप्यते यशः ।
सुदानाज्जायते कीर्तिः सुदानात्प्राप्यते सुखम् ॥ ४३ ॥

दानेन स्वर्गमाप्नोति फलं तत्र भुनक्ति च । दत्तस्यापि सुदानस्य श्रद्धायु
कालेप्राप्ते व्रजेत्तीर्थं पुण्यस्यापि फलं त्विदम् । पात्रभूताय विप्राय श्रद्धा
यो ददाति महादानं मयिभावं निवेश्य च । तस्याहं सकलं दद्मि मनसा यं

वेन उवाच ।

कालं दानस्य मे ब्रूहि कीदृक्कालस्य लक्षणम् ।
तीर्थस्यापि च यद्रूपं पात्रस्यापि सुलक्षणम् ॥ ४७ ॥

दानस्यापि जगन्नाथ विधिं विस्तरतो वद । प्रसादसुमुखो भूत्वा दया मे

श्रीकृष्ण उवाच ।

दानकालं प्रवक्ष्यामि नित्यं नैमित्तिकं नृप । काम्यं चान्यं महाराज चतु
सूर्योदयस्य वेलायां पापं नश्यति सर्वतः । अन्धकारादिकानां च घोराणां

दिवि सूर्यो ममांशोऽयं तेजसां कल्पितोनिधिः ।
तस्यैव तेजसा दग्धा भस्मतां यान्ति किल्बिषाः ॥ ५१ ॥
उदयन्तं ममांशं यो दृष्ट्वा दत्ते तु वार्यपि ।
तस्य किं कथ्यते भूप नित्यं पुण्यविवर्द्धनम् ॥ ५२ ॥
सम्प्राप्तायां सुवेलायां तस्यां पुण्यकरो नरः ।
स्नात्वाऽभ्यर्च्य पितॄन्देवान्दानदाता भवेत्पुनः ॥ ५३ ॥

यथाशक्तिप्रभावेन श्रद्धापूतेन चेतसा । अन्नं पयः फलं पुष्पं वस्त्रं ता
हेमरत्नादिकं चैव तस्य पुण्यमनन्तकम् । मध्याह्ने तु ततो राजन्नपराह्ने
मामुद्दिश्य च योदद्यात्तस्य पुण्यमनन्तकम् । खाद्यपानादिकं मिष्टं लेपनं
कर्पूरादिकमेवापि वस्त्रालङ्कारसंयुतम् । अविच्छिन्नं ददात्येवं भोगसौख्य

नित्यकालो मयाख्यातो दानपूजार्थिनां शुभः ।
अथातः सम्प्रवक्ष्यामि नैमित्तिकमनुत्तमम् ॥ ५८ ॥

ालेष्वपि दातव्यं दानमेवं न संशयः । शून्यं दिनं न कर्तव्यमात्मनो हितमिच्छता
न्काले प्रदत्तं हि किंचिद्दानं नराधिप । तत्प्रभावान्महाप्राज्ञो बहुसामर्थ्यसंयुतः ॥
ढ्यो गुणवान्प्राज्ञः पण्डितोऽपि विचक्षणः । पक्षं मासं दिनं यावन्न दत्तं वैयदाशनम्
द्धे वारयाम्येनं भक्ष्याच्चैव नरोत्तमम् । स्वमलं भक्षितं चैव अदत्त्वा दानमुत्तमम्
ादयाम्यहं रोगं सर्वभोगनिवारणम् । तेषां कायेष्वसन्तुष्टीव हृपीडाप्रदायकम् ॥
ानलेन संयुक्तं ज्वरं सन्तापकारणम् । त्रिकालेषु न दत्तं यैर्ब्राह्मणेषु सुरेषु च ॥
मश्नाति मिष्टं तु तेन पापं महत्कृतम् । प्रायश्चित्ते न रौद्रेण तमेवं परिशोधयेत् ॥
ासैर्महाराज क्षयशोषकरादिकैः । चर्मकारो यथाचर्मकुण्डस्योपरि निर्घृणः ॥
येच्च कषायैश्च तच्चर्मस्फोटयत्यथ । तथाऽहं पापकर्तारं शोधयामि न संशयः

ओषधीनां सुयोगाच्च कषायैः कटुकैर्ध्रुवम् ।
उष्णोदकैश्च सन्तापैर्वैद्यरूपेण नान्यथा ॥ ६८ ॥

भुङ्क्ते ततस्सोऽग्रेभोगान्पुण्यान्मनोऽनुगान् । नकरोतिसमर्थस्सन्सर्वदानमनुत्तमम्
ापापरूपेण तमेवं परितापये । नित्यकालस्य यद्दानमात्मार्थं पापिभिर्यथा ॥
राजराजेन्द्र श्रद्धापूतेन चेतसा । तथा ताञ्चारयाम्येतानुपायैर्दारुणैः किल ॥

नैमित्तिकं तथा कालं पुण्यं चैव तवाग्रतः ।
प्रवक्ष्यामि नरश्रेष्ठ सुबुद्ध्या शृणुतत्परः ॥ ७२ ॥

वास्या महाराज पौर्णमासी तथैव च । यदाभवति सङ्क्रान्तिर्व्यतीपातो नरेश्वर
तेश्च यदाप्रोक्ता यदाचैकादशी भवेत् । महामाघी तथाषाढी वैशाखी कार्तिकीतथा
सोमसमायोगे मन्वादिषु युगादिषु । गजच्छाया तथा प्रोक्ता पितृक्षयतिथिस्तथा

एते नैमित्तिकाः ख्यातास्तवाग्रे नृपसत्तम ।
एतेषु दीयते दानं तस्य दानस्य यत्फलम् ॥ ७६ ॥

लं तु प्रवक्ष्यामि श्रूयतां नृपसत्तम । मामुद्दिश्य नरो भक्त्याब्राह्मणाय प्रयच्छति
हं निर्विकल्पे न प्रयच्छामि न संशयः । गृहं सौख्यं महाराज स्वर्गमोक्षादिकंबहु


काम्यं काले प्रवक्ष्यामि दानस्य फलदायकम् ।

व्रतानामेव सर्वेषां देवादीनां तथैव च ॥ ७९ ॥

दानस्य पुण्यकालं तु सम्प्रोक्तं द्विजसत्तमैः। आभ्युदयिकमेवापि कालंव
शुभानामेव सर्वेषां वैवाहिकमनुत्तमम्। पुत्रस्य जातमात्रस्य चौलमौञ्ज्यां
प्रासादध्वजदेवानां प्रतिष्ठादिककर्मणि । वापीकूपतडागानामारामस्य

तदाभ्युदयिकं प्रोक्तं मातृणां यत्र पूजनम् ।
तस्मिन्काले ददेद्दानं सर्वसिद्धिप्रदायकम् ॥ ८३ ॥
त्रिविधोऽयं तु ते कालः प्रोक्तश्चैव नृपोत्तम ।
अन्यच्चैव प्रवक्ष्यामि पापपीडानिवारणम् ॥ ८४ ॥

मृत्युकाले च सम्प्राप्ते क्षयं ज्ञात्वा नरोत्तम। तत्रदानं प्रदातव्यं यममार्ग

नित्यनैमित्तिकात्कालात्काम्याभ्युदयिकात्तथा ।
अन्त्यः कालो महाराज समाख्यातस्तवाग्रतः ॥ ८६ ॥

एते कालाःसमाख्याताःसत्कर्मफलदायकाः। तीर्थस्य लक्षणं राजन्प्रवक्ष्या

सुतीर्थानामियं गङ्गा भाति पुण्या सरस्वती ।
रेवा च यमुना तापी तथा चर्मण्वती नदी ॥ ८८ ॥

सरयूर्घर्घरावेणा सर्वपापप्रणाशिनी। कावेरी कपिलाचान्या विशाला वि
गोदावरी समाख्याता तुङ्गभद्रा नरोत्तम। पापानां भीतिदां नित्यं भीमर
देविकाकृष्णगङ्गा च अन्याः सरिद्वरोत्तमाः। एतासां पुण्यकालेषु सन्तितीर्थ
ग्रामे वा यदि वाऽरण्ये नद्यः सर्वत्र पावनाः। तत्रतत्रप्रकर्तव्याः स्नानदानादि
यदा न ज्ञायते नाम तासां तीर्थस्यसत्तम। नामोच्चारं प्रकुर्वीतं विष्णुतीर्थ
तीर्थस्य देव तातद्वदहमेवं न संशयः। मामेवमुच्चरैद्योनै तीर्थे देवेषु साधक
तस्य पुण्यफलं जातं मन्नाम्ना नृपनन्दन। अज्ञातानां सुतीर्थानां देवानां
स्नानेदाने महाराज मन्नामहिसमुच्चरैत्। तीर्थानामेव राजेन्द्र धात्राद्या
सिन्धवः सर्वपुण्यानां सर्वस्थाः क्षितिमण्डले। यत्र तत्र प्रकर्तव्यं स्नानदा

अक्षयंफलमाप्नोति सुतीर्थानां प्रसादतः। तीर्थरूपा महापुण्याः सागराः

साद्यास्तथा राजन्सरस्यश्च प्रकीर्तिताः । निर्भराःपल्वलाः प्रोक्तातीर्थरूपानसंशयः
स्वल्पा नद्यो महाराज तासु तीर्थं प्रतिष्ठितम् ।
खातेष्वेवं च सर्वेषु वर्जयित्वा च कूपकम् ॥ १०० ॥
स्तास्तीर्थरूपाश्च मेर्वाद्याश्च महीतले । यज्ञभूमिश्च यज्ञश्च अग्निहोत्रे यथास्थितः ॥
द्धभूमिस्तथा शुद्धो देवशाला तथापुनः । होमशाला तथा प्रोक्ता वेदाध्ययनवेश्म च
षु पुण्य संयुक्तं गौस्थानं वरमुत्तमम् । सोमपायी भवेद्यत्र तीर्थं तत्र प्रतिष्ठितम् ॥
ामा यत्रवैपुण्या अश्वत्थो यत्र तिष्ठति । ब्रह्मवृक्षो भवेद्यत्र वटवृक्षस्तथैव च ॥
अन्ये चऽवन्य संस्थाने तत्र तीर्थं प्रतिष्ठितम् ।
एते तीर्थाः समाख्याताः पितामाता तथैव च ॥ ५ ॥
णं पठ्यते यत्र गुरुर्यत्र स्वयंस्थितः । सुभार्यातिष्ठते यत्र तत्र तीर्थं न संशयः ॥
त्रस्तिष्ठते यत्र तत्र तीर्थं न संशयः : एतान्यापि च तीर्थानि राजवेश्म तथैव च ॥

वेन उवाच ।

स्य लक्षणं ब्रूहि तस्मै देयं सुरोत्तम । प्रसाद सुमुखो भूत्वा कृपया मममाधव ॥

वासुदेव उवाच ।

राजन्महाप्राज्ञ पात्रस्यापि सुलक्षणम् । यस्मै देयंसुदानं च श्रद्धापूतैर्महात्मभिः ॥
णं सुकुलोपेतं वेदाध्ययनतत्परम् । शान्तं दान्तं तपोयुक्तं शुक्लमेव विशेषतः ॥
वन्तं ज्ञानवन्तं देवपूजनतत्परम् । सत्यवन्तं महापुण्यं वैष्णवं ज्ञानपण्डितम् ॥
ं मुक्तलौल्यं च पाखण्डैस्तु विवर्जितम् । एवं पात्रं समाख्यातमन्यदेवंवदाम्यहम्
तैर्गुणैर्युक्तं स्वसृपुत्रं नरोत्तमम् । एतं पात्रं विजानीहि दुहिस्तुस्तनयं ततः ॥
ातरं महाराज भावैरेतैश्च संयुतम् । गुरुं च दीक्षितं चैव पात्रभूतं नरोत्तम ॥
न्येव सुपात्राणि दानयोग्यानि सत्तम । वेदाचार समोपेतस्तृप्तिं नैव च गच्छति ॥
ेटिकलतं विप्रं तथाकाणंसुभ्रूतकम् । अतिकृष्णं महाराज कपिलं परिवर्जयेत् ॥
ाक्षं सुनीलं च श्यावदन्तं विवर्जयेत् । नीलदन्तं तथा राजन्पीतदन्तं तथैव च ॥
त्तं कृष्णदन्तं च बर्बरं खलतिमासुलम् । हीनाङ्गमधिकाङ्गं च कुष्ठिनं कुनखं तथा

दुश्चर्माणं महाराज खल्वाटं परिवर्जयेत् । अन्यायेनुरतायस्य जायाविप्रस्य
तस्मै दानं नदातव्यं यदि ब्रह्मसमोभवेत् । स्त्रीजिताय न दातव्यं शास्त्रार्णे
व्याधिताय न दातव्यं मृतभोजिषु भूपते । चोराय च न दातव्यं सयदि
अतृप्ताय न दातव्यं शावं तु परिवर्जयेत् ।
अतिस्तब्धाय नोदेयं शठाय च विशेषतः ॥ २२ ॥
वेदशास्त्रसमायुक्तःसदाचारेण वर्जितः । श्राद्धेदाने च राजेन्द्र नैवयुक्तः
अथदानं प्रवक्ष्यामि सफलं पुण्यदायकम् । कालतीर्थं सुपुत्राणां श्रद्धायो
नास्ति श्रद्धा समंपुण्यं नास्ति श्रद्धा समंसुखम् ।
नास्ति श्रद्धासमं तीर्थं संसारे प्राणिनां नृप ॥ २५ ॥
श्रद्धाभावेन संयुक्तो मामेवं परिसंस्मरेत् । पात्रहस्ते प्रदातव्यं स्वल्पमेव
एवंविधस्यदानस्य विधियुक्तस्ययत्फलम् । अनन्तंतदवाप्नोति मत्प्रासाद
इति श्रीपाद्मपुराणेभूमिखण्डेवेनोपाख्यानेएकोनचत्वारिंशोऽध्यायः ॥

---

## चत्वारिंशोऽध्यायः

### नित्यनैमित्तिकदानफलकथनम् ।

वेन उवाच ।

नित्यदानफलं देव त्वत्तःपूर्वंमयाश्रुतम् । नैमित्तिकस्यदानस्य दत्तस्यापि
तत्फलं मे समाचक्ष्व त्वत्प्रसादात्प्रयत्नतः ।
शृण्वंस्तृप्तिं न गच्छामि श्रोतुं श्रद्धा प्रवर्तते ॥ २ ॥

विष्णुरुवाच ।

नैमित्तिकं प्रवक्ष्यामि दानमेव नृपोत्तम । महापर्वणि सम्प्राप्ते येन दाना

सत्पात्रेभ्यःप्रदत्तानि तस्य पुण्य फलं शृणु । गजं रथं प्रदत्ते यो ह्यश्वंचापि

च भृत्यैस्तु संयुक्तःपुण्यदेशे नृपोत्तमः। जायते हि महाराज मत्प्रसादान्न संशयः
ा भवति धर्मात्मा ज्ञानवान्बलवान्सुधीः। अजेयःसर्वभूतानां महातेजाःप्रजायते॥
पर्वणि सम्प्राप्ते भूमिदानं ददाति यः। गोदानं वा महाराज सर्वभोगपतिर्भवेत्॥

ब्राह्मणाय सुपुण्याय दानं दद्यात्प्रयत्नतः।
महादानानि यो दद्यात्तीर्थेपर्वणि पात्रवित्॥ ८॥

विहं प्रवक्ष्यामि भूपति त्वं प्रजायते। तीर्थे पर्वणि सम्प्राप्ते गुप्तदानं ददाति यः
ीनामाशु सम्प्राप्तिरक्षरापरिजायते। महापर्वणिसम्प्राप्ते तीर्थेषु ब्राह्मणाय च॥

सुचैलं च महादानं काञ्चनेनसमन्वितम्।
पुण्यफलं प्रवक्ष्यामि तस्य दानस्य भूपते॥ ११॥

यन्ते बहवःपुत्राःसुगुणा वेदपारगाः। आयुष्मन्तःप्रजावन्तो यशःपुण्यसमन्विताः॥
ुलाश्चैव जायन्ते स्फीता लक्ष्मीर्महामते। सौख्यं च लभतेपुण्यं धर्मवान्परिजायते
पर्वणिसम्प्राप्ते तीर्थे गत्वा प्रयत्नतः। कपिलां काञ्चनीं दद्याद्ब्राह्मणाय महात्मने

तस्यपुण्यं प्रवक्ष्यामि दानस्य च महामते।
कपिलादो महाराज सर्वसौख्यान्प्रभुञ्जति॥ १५॥

द्ब्रह्माप्रजीवेत्स तावत्तिष्ठति तत्र सः। महापर्वणिसम्प्राप्ते अलङ्कृत्य च गां तदा
ञ्चनेनापिसंयुक्तां वस्त्रालङ्कारभूषणैः। तस्यदानस्य राजेन्द्र फलभोगं वदाम्यहम्॥
ुलाजायते लक्ष्मीर्दानभोग समाकुला। सर्वविद्यापतिर्भूत्वा विष्णुभक्तो भवेत्किल

विष्णुलोके वसेन्मर्त्यो यावत्तिष्ठति मेदिनी।
तीर्थंगत्वा तु यो दद्याद्ब्राह्मणाय विभूषणम्॥ १६॥

त्वा तु विपुलान्भोगानिन्द्रेण क्रीडतेसह। महापर्वणिसम्प्राप्ते वस्त्रं च द्विजपुङ्गवे
ान्नं भूमिसंयुक्तं पात्रे श्रद्धासमन्वितः। मोदते स तु वैकुण्ठे विष्णुतुल्यपराक्रमः॥
स्त्रंकाञ्चनं दत्त्वा द्विजायपरिशीलिने। स्वेच्छयाअग्निसदृशो वैकुण्ठे स वसेत्सुखी
र्णस्य सुकुम्भं च घृतेन परिपूरयेत्। पिधानं रोप्यंकर्तव्यं वस्त्रहारैरलङ्कृतम्॥



पुष्पमालान्वितं कुर्याद्ब्रह्मसूत्रेण शोभितम्।

प्रतिष्ठितं वेदमन्त्रैस्तं सम्पूज्य महामते ॥ २४ ॥
उपचारैःपवित्रैश्च षोडशैःपरिपूजयेत्। स्वलङ्कृत्य ततोदद्याद्ब्राह्मणाय
षोडशैवततोगावःसवस्त्राःकांस्यदोहनाः। कुम्भयुक्ताश्चचत्वारो दक्षिणांच
तथाद्वादशका गावो वस्त्रालङ्कारभूषणाः पृथग्भूताय विप्राय दातव्या
एवमादीनि दानानि अन्यानि नृपनन्दन।
तीर्थकालं सुसम्प्राप्य पात्रसम्पत्तिमेव च ॥ २८ ॥
श्रद्धाभावेन दातव्यं बहुपुण्यकरं भवेत्। विष्णुमुद्दिश्य यदानं कामनापरि
तस्यदानस्य भावेन भावना परिभावितः। तादृक्फलं समश्नाति मानुषो
आभ्युदयं प्रवक्ष्यामि यज्ञादिषु प्रवर्तते। तेनदानेन तस्यापि श्रद्धया च
प्रज्ञावृद्धिं समाप्नोति न च दुखं प्रविन्दति।
भोगान्भुनक्ति धर्मात्मा जीवमानस्तु साम्प्रतम् ॥ ३२ ॥
ऐन्द्रास्तु भुङ्क्ते भोगान्सदाता दिव्यांगतिं गतः।
स्वकुलं नयते स्वर्गं कल्पानां च सहस्रकम् ॥ ३३ ॥
एवमाभ्युदयं प्रोक्तमथान्यत्ते वदाम्यहम्। कायस्य च क्षयं ज्ञात्वा जरया
दानं तेन प्रदातव्यमाशां कस्य न कारयेत्। मृते च मयि मे पुत्रा अन्येस्व
कथमेते भविष्यन्ति मां विना सुहृदोमम्। तेषां मोहात्प्रमुग्धो वै न ददा
मृत्युंप्रयाति मोहात्मा रुदन्ति मित्रबान्धवाः। दुःखेनपीडिताःसर्वेमायामो
सङ्कल्पयन्ति दानानि मोक्षं वै चिन्तयन्ति च। तस्मिन्मृतेमहाराज मायामो
विस्मरन्ति च दानानि लोभात्मानो दिशन्ति न।
योऽसौ मृतो महाराज यमपथं सुदुःखितः ॥ ३६ ॥
तृषाक्षुधा समाक्रान्तो बहुदुःखैःप्रपीडितः। तस्माद्दानं प्रदातव्यं स्वयमेव
कस्यपुत्राश्च पौत्राश्च कस्य भार्यानृपोत्तम। संसारेनास्ति कःकस्य तस्मा
ज्ञानवता प्रदातव्यं स्वयमेव न संशयः। अन्नं पानं च ताम्बूलमुदकं का

सुगां सवत्सां भूमिं च फलानि विविधानि च।

जलपात्राण्यनेकानि सोदकानि नृपोत्तम ॥ ४३ ॥
त्रानि विचित्राणि यानान्येव महामते। नानागन्धं सकर्पूरं पादयोर्वै सुखप्रदे ॥
नहौ प्रदातव्यौ यदीच्छेद्विपुलं सुखम्। एतैर्दानैर्महाराज यममार्गं सुखेन वै ॥ ४५ ॥
प्रयाति मानवो राजन्यमदूतैरलङ्कृतम् ॥ ४६ ॥
इति श्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेचत्वारिंशोऽध्यायः ॥ ४० ॥

---

# एकचत्वारिंशोऽध्यायः

## सुकलायापातिव्रत्यचरित्रवर्णनम्।

वेन उवाच।

भार्या कथंतीर्थं पितामाता कथं वद। गुरुश्चैव कथंतीर्थं तन्मे विस्तरतो वद॥१॥

श्रीविष्णुरुवाच।

तवाराणसीरम्या गङ्गायुक्ता महापुरी। तस्यांवसति वैश्योहि कृकलो नामनामतः
भार्यामहासाध्वी पतिव्रतपरायणा। धर्माचारपरानित्यं सा वै पतिपरायणा ॥
लानाम पुण्याङ्गी सुपुत्रा चारुमङ्गला। सत्यंवदा सदाशुद्धा प्रियाकारा प्रियप्रिया
णैःसमायुक्ता सुभगा चारुकारिणी। सवैश्य उत्तमो नानाधर्मज्ञो ज्ञानवान्गुणी॥
श्रौतधर्मे च सदाश्रवणतत्परः। तीर्थयात्राप्रसङ्गेन बहुपुण्य प्रदायिकाम् ॥ ६ ॥
गानिर्गतो यात्रां तीर्थानां पुण्यमङ्गलाम्। ब्राह्मणानां प्रसङ्गेन सार्थवाहेन तेन च
यतो धर्ममार्गं तु तमुवाच पतिव्रता। पतिस्नेहेन संमुग्धा भर्तारं वाक्यमब्रवीत् ॥

सुकलोवाच।

धर्मतःपत्नी सहपुण्यकरीप्रिय। पतिमार्गं प्रतीक्ष्याहं पतिदेवं यजाम्यहम् ॥
कदानैव मयात्याज्यं सामीप्यं ते द्विजोत्तम।
तवच्छायां समाश्रित्य करिष्ये धर्ममुत्तमम् ॥ १० ॥

पतिव्रताख्यं पापघ्नं नारीणां गतिदायकम् ।
पुण्यस्त्री कथ्यते लोके यास्यात्पतिपरायणा ॥ ११ ॥
युवतीनां पृथक्तीर्थं विनाभर्तुर्न शोभते । सुखदंनास्ति वै लोके स्वर्गमोक्ष
सव्यंपादं च भर्तुश्च प्रयागं विद्धिसत्तम । वामं च पुष्करं तस्य या नारी
तस्य पादोदकस्नानात्तत्पुण्यपरिजायते । प्रयागपुष्करसमं स्नानं स्त्रीणां
सर्वतीर्थमयो भर्ता सर्वपुण्यमयःपतिः । मखानां यजनात्पुण्य यद्वै भवति
तत्फलं समवाप्नोति सेवया भर्तुरेव हि । गयादीनां सुतीर्थानां यात्रा कृत्वा
तत्फलं समवाप्नोति भर्तुःशुश्रूषणादपि । समासेन प्रवक्ष्यामि तन्मे नि
नास्त्यासां हि पृथग्धर्मःपतिशुश्रूषणं विना ।
तस्मात्कान्त सहायन्ते कुर्वाणा सुखदायिनी ॥ १८ ॥
तवच्छायां समाश्रित्य आगमिष्यामि नान्यथा ।
रूपं शीलं गुणं भक्ति समालोक्य वयस्तथा ॥ १६ ॥
सौकुमार्यं विचार्यैवं कृकलःसपुनःपुनः । यद्येवं हि नयिष्यामि दुर्गमार्गं
रूपनाशो भवेच्चास्याःशीतातप विलोडनात् ।
पद्मगर्भ प्रतीकाशमस्याश्चाङ्गं प्रवर्णकम् ॥ २१ ॥
झञ्झावातेन शीतेन कृष्णवर्णं भविष्यति ।
पन्थाःकर्कश सुग्रावा पादौ चास्याःसुकोमलौ ॥ २२ ॥
एष्यते वेदना तीव्रामथोगन्तुं न च क्षमा । क्षुत्तृष्णाभि परीताङ्गी कीदृशी
वामाङ्गी मम च स्थानं सुखस्थानं वरानना । ममं प्राणप्रियानित्यंनित्यं
नाशमेति यदा बाला ममनाशो भवेदिह । इयं मे जीविकानित्यमियं प्राण
न नयिष्ये वनं तीर्थमेकश्चैवाप्यहं व्रजे । चिन्तयित्वा क्षणं नूनं कृकले
तस्य चित्तात्क्षोभावस्तयाज्ञातो नृपोत्तम । पुनरूचे महाभागाःभर्तारं
अनघा नैव वै त्याज्या पुरुषैः शृणु सत्तम । मूलमेवं हि धर्मस्य पुरुषस्य

एवंज्ञात्वा महाभाग मामेवं नयसाम्प्रतम् । श्रुत्वा सर्वं हि तेनापि प्रियाया

थैव वचोब्रूते तामेवं कृकलःपुनः । नैवत्याज्या भवेद्भार्या प्राप्ताधर्मेण वै प्रिये ॥
भार्यापरित्यक्ता सुनीता धर्मचारिणी । दशाङ्ग धर्मस्तेनापि परित्यक्तो वरानने ॥
क्षास्त्वामेव भद्रं तेनैवत्यक्ष्ये कदाप्रिये । एवमाभाष्य तां भार्यां सम्बोध्य चपुनःपुनः
ां अज्ञातमात्रेणससार्थेन समंगतः । गते तस्मिन्महाभागे कृकले पुण्यकर्मणि ॥
ाभर्म सुवेलाया कालेपुण्ये शुभानना । नैवपश्यति भर्तारं कृकलं निजमन्दिरे ॥३४॥
त्थाय त्वरायुक्ता रुदमाना सुदुःखिता । वयस्यान्पृच्छते भर्तुर्दुःखशोकाधिपीडिता

युष्माभिर्वा महाभागा दृष्टोऽसौ कृकलो मम ।
प्राणेश्वरो गतःक्वापि भवन्तो मम बान्धवाः ॥ ३६ ॥

दृष्टो महाभागाःकृकलो मम साम्प्रतम् । भर्तारं पुण्यकर्तारं सर्वज्ञं सत्यपण्डितम्
यन्तु महात्मानं यदिदृष्टो महामतिः । तस्यास्तद्भाषितं श्रुत्वा तामूचुस्तेमहामतिम्

धर्मयात्रा प्रसङ्गेन नाथस्ते कृकलःशुभे ।
तीर्थयात्रां चकारासौ कस्माच्छोचसि सुव्रते ॥ ३९ ॥

यित्वा महातीर्थं पुनरेष्यति शोभने । एवमाश्वासिता सा च पुरुषैराप्तकारिभिः ॥
हिं गताराजन्सुकला चारुभाषिणी । रुरोद करुणं दुःखंसुकलापि परायणा ॥४१॥

यावदायाति मे भर्त्ता भूमौस्वप्स्यामि संस्तरे ।
घृतं तैलं न भोक्ष्येऽहं दधिक्षीरं तथैव च ॥ ४२ ॥

गं च परित्यक्तं तथाताम्बूलमेव च । मधुरं च तथाराजंस्त्यक्तं गुडादिकं तथा ॥

एकाहारा निराहारा तावत्स्थास्ये न संशयः ।
यावच्चागमनं भर्तुःपुनरेव भविष्यति ॥ ४४ ॥

दुःखान्विता भूत्वा एकवेणी धरापुनः । एककञ्चुकसंवीता मलिना च बभूव सा ॥

मलिनेनापि वस्त्रेण एकेनैव स्थितापुनः ।
हाहाकारं प्रमुञ्चन्तीनिःश्वसन्ती सुदुःखिता ॥ ४६ ॥
वियोगानलसन्दग्धा कृष्णाङ्गी मलधारिणी ।
एवंदुःख समाचारा सुकृशा विह्वला तदा ॥ ४७ ॥

रोदमाना दिवारात्रं निद्रांलेभे न वै निशि। क्षुधांनविन्दते राजन्दुःखेन

अथसख्यःसमायाताःपप्रच्छुःसुकलां तदा ॥ ४६ ॥

सख्यऊचुः।

सुकले चारुसर्वाङ्गि कस्माद्रोदिषि सम्प्रति। ततस्त्वं कारणंब्रूहि दुःख

सुकलोवाच।

स मां त्यक्त्वा गतोभर्ता धर्मार्थं धर्मतत्परः। तीर्थयात्राप्रसङ्गेन अटतीं

मां त्यक्त्वा स गतः स्वामी निर्दोषांपापवर्जिताम्

अहंसाध्वी समाचारा सदापुण्या पतिव्रता ॥ ५२ ॥

मां त्यक्त्वा सगतो भर्ता तीर्थसाधनतत्परः।

तेनाहं दुःखिता सख्योवियोगेनाति पीडिता ॥ ५३ ॥

जीवनाशो वरंश्रेष्ठो वरं वै विषभक्षणम्। वरमग्निप्रवेशश्च वरंकायविनाश

नारीं प्रियांपरित्यज्य भर्तायाति सुनिष्ठुरः। भर्तृत्यागो वरंनैव प्राणत्या

वियोगं न समर्थाहं सहितुं नित्यदारुणम्।

तेनाहं दुःखिता सख्यो वियोगेनापि नित्यशः ॥ ५६ ॥

सख्यऊचुः।

तीर्थयात्रांगतो भर्ता पुनरैष्यति ते पतिः। वृथा शोषयसेकायं वृथाशो

वृथात्वं तप्यसे बाले वृथाभोगान्परित्यजेः। पिवस्वपानंभुङ्क्ष्वत्वंस्वप्र

कस्यभर्ता सुताःकस्य कस्य स्वजनबान्धवाः।

कःकस्यनास्ति संसारे सम्बन्धःकेन चैव हि ॥ ५६ ॥

भक्ष्यतेभुज्यतेबालेसंसारस्यहितत्फलम्। मृतेप्राणिनिकोऽश्नातिकोहिपश्

पीयते भुज्यते बाले एतत्संसारतःफलम् ॥ ६० ॥

सुकलोवाच।

भवतीभिःप्रयुक्तं यत्तन्नस्याद्वेदसंमतम्। यातुभर्तुःपृथग्भूता तिष्ठत्येका



पापभूता भवेन्नारी तां न मन्यन्ति सज्जनाः।

भर्तुःसार्धंसदा सख्यो दृष्टोवेदेषु सर्वदा ॥ ६२ ॥

न्धःपुण्यसंसर्गाज्जायते नात्रसंशयः । नारीणां च सदातीर्थं भर्ताशास्त्रेषु पठ्यते

ाचाहयेन्नित्यं वाचाकायेन कर्मभिः । मनसा पूजयेन्नित्यं भावसत्येन तत्परा ॥

पार्श्वंमहातीर्थं दक्षिणाङ्गं सदैव हि । तमाश्रित्ययदानारी गृहस्थापरिवर्त्तयेत् ॥

दानपुण्यैश्च तस्यदानस्य यत्फलम् । वाराणस्यांच गङ्गायां यत्फलं न च पुष्करे

कायां न चावन्त्यां केदारे शशिभूषणे । लभतेनैव सा नारी यजमाना सदाकिल ॥

तादृशं फलमेवं सा न प्राप्नोति कदा सखि ।

सुमुखं पुत्रसौभाग्यं स्नानं दानं च भूषणम् ॥ ६८ ॥

ालङ्कार सौभाग्यं रूपं तेजःफलं सदा । यशःकीर्तिमवाप्नोति गुणं च वरवर्णिनी

प्रसादात्सर्वं च लभते नात्रसंशयः । विद्यमाने यदाकान्ते अन्यं धर्मं करोति या ॥

निष्फलं जायते तस्याःपुंश्चली परिकथ्यते ।

नारीणां यौवनंरूपमवतारं स्मृतं ध्रुवम् ॥ ७१ ॥

यापि हि भर्तृश्च तस्यार्थे भूमिमण्डले । सुपुत्रा सुयशानारी परिकथ्येत वै सदा

भर्तरि संसारे दृश्या नारी न संशयः । पतिहीना भवेन्नारी भवेत्सा भूमिमण्डले

कुतस्तस्याःसुखं रूपं यशःकीर्तिःसुता भुवि ।

सुदौर्भाग्यं महद्दुःखं संसारे परिभुज्यते ॥ ७४ ॥

ागा भवेत्सा च दुःखाचारा सदैव हि । तुष्टेभर्तरि तस्यास्तु तुष्टाःसर्वाश्च देवता

र्तरि तुष्यन्ति ऋषयो देवमानवाः । भर्ता नाथो गुरुर्भर्ता देवता दैवतःसह ॥७६॥

तीर्थश्च पुण्यश्च नारीणां नृपनन्दन । शृङ्गारं भूषणं रूपं वर्णं सौगन्धमेव च ॥७७

सा तिष्ठते नित्यं वर्जयित्वासुपर्वसु । शृङ्गारैर्भूषणःसा तु शुशुभे सा यदा पति

पत्याविना भवत्येवं क्षीरंसर्पमुखे यथा ।

भर्तुरर्थे महाभागा सुव्रता चारुमङ्गला ॥ ७९ ॥

र्तरि या नारी शृङ्गारं कुरुते यदि । रूपंवर्णं च तत्सर्वं शवरूपेण जायते ॥ ८० ॥

ते भूतले लोकाःपुंश्चली यं न संशयः । तस्माद्भर्तुर्वियुक्ता या नार्यःशृणुत भूतले

इच्छन्त्या वै महासौख्यं भवितव्यं कदाचन ।
सुजायायाःपरोधर्मो भर्ता शास्त्रेषु गीयते ॥ ८२ ॥
तस्माद्वैशाश्वतोधर्मो न त्याज्यो भार्ययाकिल । एवंधर्मं विजानामिकथंभर्ता
इत्यर्थे श्रूयते सख्य इतिहासःपुरातनः । सुदेवायाश्च चरितं सुपुण्यं पापनाश
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डेवनोपाख्यानेसुकलाचरित्रेएकचत्वारिं

---

# द्विचत्वारिंशोऽध्यायः

## सुदेवायाश्चरित्रवर्णनम् ।

सख्यऊचुः ।

सुदेवा का त्वयाप्रोक्ता किमाचारा वदस्व नः । त्वयाप्रोक्तं महाभागेवद नः

सुकलोवाच ।

अयोध्यायां महाराजःस आसीद्धर्मकोविदः । मनुपुत्रो महाभागःसर्वधर्मा
इक्ष्वाकुर्नाम सर्वज्ञो देवब्राह्मण पूजकः । तस्यभार्या सदापुण्या पतिव्रतपरा
तयासार्द्धं यजेद्यज्ञं तीर्थानि विविधानि च ।
वेदराजस्य वीरस्य काशीशस्य महात्मनः ॥ ४ ॥
सुदेवानाम वै कन्या सत्याचारपरायणा । उपयेमे महाराज इक्ष्वाकुस्तां
सुदेवां चारुसर्वाङ्गीं सत्यव्रत परायणाम् । तयासार्द्धं यजेद्यज्ञान्सुपुण्यान्पु
स रेमे नृपशार्दूलो नित्यं च प्रियया तया । एकदा तु महाराजस्तयासार्द्धं
गङ्गारण्यं समासाद्य मृगयां क्रीडते सदा ।
सिंहान्हत्वा वराहांश्च गजांश्च महिषांस्तथा ॥ ८ ॥
क्रीडमानस्य तस्याग्रे वराहश्च समागतः । बहुशूकरयूथेन पुत्रपौत्रैरलङ्कृ
एका च शूकरी तस्य प्रियापार्श्वे प्रतिष्ठिता । दृष्ट्वाच राजराजेन्द्रं दुर्जयं

[?]ाधारमाश्रित्य भार्यया सहशूकरः। तिष्ठत्येकःपरिवृतःपुत्रपौत्रादिभिस्तु सः॥
महाराज कृतं तेषां ज्ञात्वा तु कदनं महत्।
तानुवाच सुतान्पौत्रान्भार्यां तां च सशूकरः॥ १२॥
[?]लाधिपतिर्वीरो मनुपुत्रो महाबलः। क्रीडते मृगयां कान्ते मृगान्संहरते बहून्॥
[?]मां दृष्ट्वामहाराज एष्यतेनात्रसंशयः। अन्येषांलुब्धकानां मे नास्तिप्राणभयंध्रुवम्
रूपं नृपोदृष्ट्वा क्षमांनैव करिष्यति। हर्षेण महताविष्टो बाणपाणिर्धनुर्द्धरः॥
[?]मेयुक्तो महातेजा लुब्धकैःपरिवारितः। प्रिये करिष्यतेघातं ममाप्येवं न संशयः॥

शूकर्युवाच।

यदायदापश्यसि लुब्धकान्वहून्महाशने कान्तसमायुधान्वहून्।
एतैस्तु पुत्रैर्ममपौत्रकै समं दूरंनुभो यासि पलायमानः॥ १७॥
त्यक्त्वा सुधैर्यं बलपौरुषं महन्महाभये नापिविषण्णचेतनः।
दृष्ट्वा नृपेन्द्रं पुरुषोत्तमोत्तमं करोषि किं कान्त वदस्व कारणम्॥ १८॥
तस्यास्तु वाक्यं सनिशम्य कोल उवाच तां शूकरराज उत्तरम्।
यदर्थं भीतोऽस्मि सुलुब्धकात्प्रिये दृष्ट्वा गतो दूर निशम्य शूकरान्॥१९॥
सुलुब्धकाःपापकराःशठाःप्रिये कुर्वन्ति पापं गिरिदुर्गकन्दरे।
सदैव दुष्टा बहुपापचिन्तका जाताश्च सर्वे परिपापिनांकुले॥ २०॥
तेषां हि हस्तान्मरणाद्बिभेमि मृतोऽपि यास्यामि पुनश्च पापम्।
दूरं गिरिं पर्वतकन्दरं च व्रजामि कान्ते अपमृत्युभीतः॥ २१॥
अयं हि पुण्यो नरनाथ आगतो विश्वाधिकःकेशवरूप भूपः।
युद्धं करिष्ये समरे महात्मनासार्द्धं प्रिये पौरुषविक्रमेण॥ २२॥
जेष्यामि भूपं यदि स्वेनतेजसा भोक्ष्यामि कीर्तिं त्वतुलां पृथिव्याम्।
तेनाहतो वीरवरेण सङ्गरे यास्यामि लोकं मधुसूदनस्य॥ २३॥
ममाङ्गभूते न पले न मेदसा तृप्तिं परांयास्यति भूमिनाथः।
तृप्ता भविष्यन्ति सुलोकदेवता अस्मादयं चागतो वज्रपाणिः॥ २४॥

अस्यैव हस्तान्मरणं यदा भवेल्लाभश्च मे सुन्दरिकीर्तिरुत्तमा।
तस्माद्यशो भूमितले जगत्त्रये व्रजामि लोकं मधुसूदनस्य ॥
नैवंभीतोऽस्मि क्षुब्धोऽस्मि गतोऽहं गिरिसानुषु।
पापाद्भीतो गतःकान्ते धर्मं दृष्ट्वास्थितोह्यहम् ॥ २६ ॥

न जाने पातकं पूर्वमन्यजन्मनि चार्जितम्। येनाहं शौकरींयोनिं गतोऽहं पा
क्षालयिष्याम्यहं घोरं पूर्वपातक सञ्चयम्। बाणौदकैर्महाघोरैः सुतीक्ष्णै
पुत्रान्पौत्रान्वरांकन्यां कुटुम्बंबालवृद्धकम्। गिरिंगच्छगृहीत्वा तु मम मो
ममस्नेहं परित्यज्य हरिरेष समागतः। अस्यहस्तात्प्रयास्यामि तद्विष्णोः
देवानापि ममाद्यैव स्वर्गद्वारमनुत्तमम्। उद्घाटित कपाटं तु यास्यामि सु

सुकलोवाच।

तच्छ्रुत्वा वचनं तस्य शूकरस्य महात्मनः। उवाचतत्प्रिया सख्यःसीदमा

शूकर्युवाच।

यस्मिन्यूथे भवान्स्वामी पुत्रपौत्रैरलङ्कृतः। मित्रैश्च भ्रातृभिश्चैव अन्यैःस्व
त्वयैवालङ्कृतोयूथो भवता परिशोभते। त्वां विनायं महाभाग कीदृग्यूथो
तथैव स्वबलेनापि गर्जमानाश्च शूकराः। विचरन्ति गिरौ कान्त तनया
कन्दान्मूलान्सुभक्षन्ति निर्भयास्तव तेजसा। दुर्गेषु वनकुञ्जेषु ग्रामेषु
न कुर्वन्ति भयं तीव्रं सिंहानोमिहपर्वते।
मनुष्याणां महाबाहो पालितास्तव तेजसा ॥ ३७ ॥

त्वया त्यक्ताअमी सर्वेबालका ममदारकाः। दीनाश्चैवाकुलाश्चैव भविष्यन्ति
नित्यमेवसुखं वर्त्म गत्वा पश्यन्ति बालकाः। पतिहीना यथानारी शोभते
अलङ्कृता यथादिव्यैरलङ्कारैःसकाञ्चनैः। परिच्छदैर लवस्त्रैःपितृमातृ
श्वश्रूश्वशुरकैश्चान्यैःपतिहीना न भाति सा। चन्द्रहीना यथारात्रिःपुत्रहीन
दीपहीनं यथागेहं नैवभाति कदाचन। त्वांविनाऽयं तथायूथो नैवंशोभेत
आचारेण विनामर्त्यो ज्ञानहीनो यतिर्यथा।

मन्त्रहीनो यथाराजा तथायं नैव शोभते ॥ ४३ ॥
न विनानौर्वा सम्पूर्णा परिसागरे। न भात्येवं यथासार्थःसार्थवाहेन वै विनो
ध्यक्षेण च विना यथासैन्यं न भाति च। त्वांविना वैतथासैन्यंशूकराणांमहामते
भविष्यति तथा वेदहीनो यथाद्विजः। मयिभारं कुटुम्बस्य विनिवेश्य प्रगच्छसि
मरणं सुलभोज्ञात्वा का प्रतिज्ञा तवेदृशी।
त्वां विनाहं न शक्नोमि धर्तुं प्राणान्प्रियेश्वर ॥ ४७ ॥
च सहिता स्वर्गं भूमिंवाथ महामते। नरकंवापि भोक्ष्यामि सत्यंसत्यंवदाम्यहम्
त्वं वा पुत्रांस्तु पौत्रांस्तु गृहीत्वा यूथमुत्तमम्।
आवां व्रजावयूथेश दुर्गमेवं सुकन्दरम् ॥ ४९ ॥
तव्यं परित्यज्य मरणायाभिगम्यते। तत्र कोदृश्यते लाभो मरणे वद साम्प्रतम्

वाराह उवाच।

वीराणां त्वं न जानासि सुधर्मं शृणु साम्प्रतम्।
युद्धार्थिना हि वीरेण वीरंगत्वा प्रयाचितम् ॥ ५१ ॥
मेयोधनं सङ्ख्ये युद्धार्थ्यहं समागतः। परेणयाचितं युद्धं न ददाति यदानरः ॥
लोभाद्भयाद्वापि मोहाद्वा शृणुवल्लभे। कुम्भीपाके तु नरकेवसेद्युगसहस्रकम् ॥
राणां परोधर्मो युद्धं देयं न संशयः। तद्युद्धं दीयमानेन रणभूमि गतेन वै ॥
तं तु परंतत्र यशःकीर्तिं प्रभुञ्जते। सवाहतो युध्यमानः पौरुषेणाति निर्भयः ॥
ोकमवाप्नोति दिव्यान्भोगान्प्रभुञ्जते। यावद्वर्षसहस्राणां विंशत्येकां प्रिये शृणु
के वसेत्तावद्देवाचारैर्महीयते। मनुपुत्रःसमायात अयंवीरो न संशयः ॥॥५७॥
सङ्ग्रामं याचमानस्तु युद्धंदेयं मया ध्रुवम्।
युद्धातिथिःसमायातो विष्णुरूपःसनातनः ॥ ५८ ॥
सत्कारो युद्धरूपेण कर्तव्यश्च मयाशुभे ॥ ५९ ॥

शूकर्युवाच।

द्धं त्वयादेयं रा[illegible] महात्मने। ततोऽयं पौरुषं कान्त पश्यामि तवकीदृशम् ॥

सुकलोवाच ।

एवमुक्त्वा प्रियान्पुत्रान्समाहूय त्वरान्विता । उवाच पुत्रकायूयं शृणुध्वं व
युद्धातिथिःसमायातो विष्णुरूपःसनातनः । मया तत्र प्रगन्तव्यं यत्रायं हि
यावत्तिष्ठति वै नाथो भवतां प्रतिपालकः । यूयं गच्छत वै दूरं दुर्गं गि

सुखं जीवतमेवत्सा वर्जयित्वा सुलुब्धकान् ।
मया तत्रैव गन्तव्यं यत्रैष हि गमिष्यति ॥ ६४ ॥

भवतां श्रेष्ठोऽयंभ्राता यूथरक्षां करिष्यति । एते पितृव्यकाःसर्वे भवतां

दूरं प्रयात वै सर्वे मांविहाय सुपुत्रकाः ॥ ६६ ॥

पुत्राऊचुः ।

अयं हि पर्वतश्रेष्ठो बहुमूल फलोदकः । भयं तु कस्य वै नास्ति सुखं जी
युवाभ्यां हि अकस्माद्वै इदमुक्तं भयङ्करम् । तन्नोहि कारणं मातवद स

शूकर्युवाच ।

अयं राजामहारौद्रःकालरूपःसमागतः । क्रीडते मृगयालुब्धो मृगान्हत्वा
इक्ष्वाकुर्नामदुर्धर्षो मनुपुत्रो महाबलः । संहरिष्यतिकालोऽयं दूरंयात सुपु

पुत्राऊचुः ।

मातरं पितरं त्यक्त्वा यःप्रयाति स पापधीः । महारौद्रं सुघोरं तु नरकं
मातुःपुण्यं पयःपीत्वा पुष्टोभवति निर्घृणः । मातरंपितरं त्यक्त्वा यः प्रया
पूयंनरकमेतीह कृमिदुर्गन्ध सङ्कुलम् । मातस्तस्मान्नयास्यामो गुरुंत्यक्त्वा
एवंविषादःसञ्जातस्तेषां धर्मार्थसंयुतः । व्यूहंकृत्वा स्थिताःसर्वे बलतेजः

साहसोत्साहसम्पन्नाःपश्यन्ति नृपनन्दनम् ।
न दन्तःपौरुषैर्युक्ताःक्रीडमाना वनेतदा ॥ ७५ ॥

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने सुकलाच

द्विचत्वारिंशत्तमोऽध्यायः ।

# त्रिचत्वारिंशोऽध्यायः

## मेरुपर्वतेमनुपुत्रस्य सैनिकैःसह शूकरस्ययुद्धम् ।

सुकलोवाच ।

ते शूकराःसर्वे युंद्धाय समुपस्थिताः । पुरःस्थितस्य ते राज्ञो ह्यवतस्थुश्चलुब्धकाः
वराहो राजेन्द्र गिरिसानुं समाश्रितः । महता यूथभावेन व्यूहंकृत्वा प्रतिष्ठति ॥
लःस्थूलपीनाङ्गो महादंष्ट्री महामुखः । दुःसहःशूकरो राजन्गर्जते चातिभैरवम् ॥
पश्यन्महाराजःशालतालवनाश्रयान् । तेषां तद्वचनंश्रुत्वा मनुपुत्रःप्रतापवान् ॥
तां शूरवाराहो विध्यतां बलदर्पितः । एवमाभाष्य तान्वीरो मनुपुत्रःप्रतापवान् ॥

अथ ते लुब्धकाःसर्वे मृगया मदमोहिताः ।
संनद्धादंशिताःसर्वे श्वभिःसार्द्धं प्रजग्मिरे ॥ ६ ॥

महताविष्टो राजराजो महाबलः । अश्वारूढःसुसैन्येन चतुरङ्गेण संयतः ॥ ७ ॥
तीरं समायातो मेरौगिरिवरोत्तमे । रत्नधातु समाकीर्णे नानावृक्षैरलङ्कृते ॥

सुकलोवाच ।

योबलधाममरीचिचयकरनिकरमयप्रोत्तुङ्गोऽत्युच्चं-
गगनमेवसम्प्राप्तोनानानगाचरितशोभोगिरिराजोभाति ॥ ९ ॥
योजनबहलविमलगङ्गाप्रवाहसमुच्चरत्तीरवीचीतरङ्गभङ्गैर्मुक्ता-
फलसदृशैर्निर्मलाम्बुकणैःसर्वत्रप्रक्षालितधवलतलशिलातलो-
गिरीन्द्रःसुश्रियायुक्तः ॥ १०
देवैश्चारणकिन्नरैःपरिवृतो गन्धर्वविद्याधरैः
सिद्धैरप्सरसांगणैर्मुनिजनैर्नागेन्द्रविद्याधरैः ।
श्रीखण्डैर्बहुचन्दनैस्ससरलैःशालैस्तमालैर्गिरी
रुद्राक्षैर्बरसिद्धिदायकवनैःकल्पद्रुमैःशोभते ॥ ११ ॥

नानाधातु विचित्रो वै नानारत्न विचित्रितैः । विमानैःकाञ्चनैर्डण्डैःकलशै
नालिकेरवनैर्दिव्यैःपूगवृक्षैर्विराजते । दिव्यपुन्नाग बकुलैःकदली खण्ड
पुष्पकैश्चम्पकैरद्रिःपाटलैःकेतकैस्तथा । नानावल्लीवितानैश्च पुष्पितैःपल्ल
नानावर्णैःसुपुष्पैश्च नानावृक्षैरलङ्कृतः । दिव्यवृक्षैःसमाकीर्णःस्फाटिकस्य
योगि योगीन्द्रसंसिद्धैःकन्दरान्तर्निवासिभिः । निर्झरैश्चैव रम्यैश्च बहुप्र
नदीप्रवाह संहृष्टैःसङ्गमैरुपशोभते । ह्रदैश्च पल्वलैःकुण्डैर्निर्मलोदकधारिभिः

गिरिराजो विभात्येकःसानुभिःसह संस्थितैः ।
शरभैश्चैवशार्दूलैर्मृगयूथैरलङ्कृतः ॥ १८ ॥

महामत्तैश्चमातङ्गैर्महिषै रुरुभिःसदा । अनेकैर्दिव्यभावैश्च गिरिराजो विभा
अयोध्याधिपतिर्वीर इक्ष्वाकुर्मनुनन्दनः । तयासुभार्ययायुक्तश्चतुरङ्ग बलेन

पुरतोलुब्धका यान्ति शूराःश्वानश्च शीघ्रगाः ।
यत्रास्ते शूकरःशूरो भार्यया सहितो बली ॥ २१ ॥

बहुभिःशूकरैर्गुप्तो गुरुभिःशिशुभिस्ततः । मेरुभूमिं समाश्रित्य गङ्गातीरं

सुकलोवाच ।

तामुवाच वराहस्तु सुप्रियां हर्षसंयुतः । प्रिये पश्यसमायातःकोशलाधिप
मामुद्दिश्य महाप्राज्ञो मृगयां क्रीडते नृपः । युद्धमेव करिष्यामि सुरासुर
अथभूपो महातेजा बाणपाणिर्धनुर्धरः । सुदेवां सत्यधर्माङ्गीं तामुवाच

पश्यप्रिये महाकोलं गर्जमानं महाबलम् ।
परिवारसमायुक्तं दुःसहं मृगघातिभिः ॥ २६ ॥

अद्यैवाहं हनिष्यामि सुबाणैर्निशितैःप्रिये । मामेव हि महाशूरो युद्धाय स
एवमुक्त्वा प्रियोभार्यां लुब्धकान्वाक्यमब्रवीत् । यथाशूरो महाशूराःप्रेषयध्वं
अथते प्रेषिताःशूरा बलतेजःपराक्रमाः । गर्जमानाःप्रधावन्ति बलतेजःप
कोलंप्रति गताःसव वायुवेगेन साम्प्रतम् । विध्यन्तिबाणजालैस्ते निशितै



नानाशस्त्रैरथास्त्रैश्च वाराह वीररूपिणम् ॥ ३१ ॥

सुकलोवाच ।

पतन्ति बाणतोमरा विमुक्तलुब्धकैःशरा
घनागिरिंप्रवर्षिणो यथा तथा धरान्तरे ।
दृढ़प्रहारिभिःसनिर्जितस्ततस्तथाशतैस्तुयूथपालकःसकोलःसङ्गरंगतः ॥ ३२ ॥
स्वपुत्र पौत्रबान्धवैःपरांश्च संहरेत्स वै
पतन्ति ते स्वदंष्ट्रया हताहवेऽव लुब्धकाः ।
पतन्ति पादहस्तकाःस्थितस्यवेगभ्रामणैः
सलुब्धगार्जमेवतं वराहोऽपश्यदागतम् ॥ ३३ ॥
स्वतेजसा विनाशितं मुखाग्रदंष्ट्रयाहतं ।
गतःसयत्र भूपतिःसवाञ्छते न सङ्गरम् ॥ ३४ ॥
इक्ष्वाकुनाथं सुमहत्प्रसह्य सन्त्रास्यक्रुद्धःसहि शूकरेशः ।
युद्धं वने वाञ्छति तेनसार्द्धमिक्ष्वाकुणा सङ्गरहर्षयुक्तः ॥ ३५ ॥
वाराहःपुनरेव युद्धकुशलःसंवाञ्छते सङ्गरं
तुण्डाग्रेणसुतीक्ष्णदन्त नखरैःक्रुद्धो धरांक्षोभयन् ।
हुङ्कारोच्चारगर्वात्प्रहरतिविमलं भूपतिं तं च राजञ्ज्ञात्वा
विष्णुपराक्रमं मनुसुतस्त्वानन्दरोमाञ्चितः ॥ ३६ ॥
दृष्ट्वा शूकरपौरुषं यमतुलं मेनेपतिर्देवराड्
देवारिंमनसाविचिन्त्य सहसा वाराहरुपेण वै ।
सम्प्रेक्ष्यैव महाबलं बहुतरं युक्तंत्वरैर्वारणं
सैन्यंकोलविनाशनाय सहसा सङ्गृह्य सङ्गृह्यताम् ॥ ३७ ॥
प्रेषिताश्च वारणा रथाश्च वेगवत्तराः
सुबाणखड्ग धारिणो भृशुण्डिभिश्च मुद्गरैः ।
सपाशपाणि लुब्धकानदन्तितत्रतत्परा
निवारितो नतिष्ठते हयागजाश्च यद्गताः ॥ ३८ ॥

क्वचित्क्वचिन्नदृश्यते क्वचित्क्वचित्प्रदृश्यते
क्वचिद्भयंप्रदर्शयेत्क्वचिद्भयान्प्रमर्दयेत् ॥ ३९ ॥
मर्दयित्वा भटान्वीरान्वाराहो रणदुर्जयः। शब्दं चकार दुर्धर्षं क्रोधारुणं
कोसलाधिपतिर्वीरस्तं दृष्ट्वा रणदुर्जयम्। युध्यमानं महाकायं मुञ्चन्तं मे
गर्जति समरं विचरति विलसति वीरान्स्वतेजसा धीरः।
तडिदिव मुखेषु दंष्ट्रा तस्यविभात्युल्लसत्येव ॥ ४२ ॥
मनुपुत्रस्तथा दृष्ट्वा कोलं च निशितैःशरैः। प्रतिभिन्नमेकैकं शस्त्राहतं च
नरपतिरुवाच-सैन्याःकिमिह न गृह्णन्तु ओजसा शूराः।
युध्यध्वं तत्र निशितैर्बाणैस्तीक्ष्णैरनेनापि ॥ ४४ ॥
समाकर्ण्य ततोवाक्यं क्रुद्धस्यापिमहात्मनः। ततस्तेसैनिकाःसर्वे युद्धायस
अनेकैर्भटसाहस्रैर्वने तं समरेस्थितम्। दिक्षु सर्वासुसंहत्य बिभिदुःशूकरं
विद्धश्चकैश्चित्तदा बाणजालैःसुयोधैश्च सङ्ग्रामभूमौ विशालैः।
क्वचिच्चक्रघातैःक्वचिद्वज्रपातैर्हतंदुर्जयं सङ्गरेतं महान्तैः ॥ ४७
ततःपौरुषैक्रोधयुक्तःसकोलःसुविच्छिद्य पाशान्रणे प्रस्थितः स
महाशूकरैःसार्द्धमेव प्रयातस्ततःशोणितस्यापि धाराभिषिक्तः॥
करोति प्रहारं च तुण्डेन वीरहयानां द्विपानां च चिच्छेद वीरः
स्वदंष्ट्राग्रभागेन तीक्ष्णेन वीरान्पदातीन्हि सम्पातयेद्रोषभावैः॥
जघानास्य शुण्डं गजस्यापि रुष्टो भटान्हतान्पादनखैस्तुहृष्टः॥
ततस्तेशूकराःसर्वे लुब्धकाश्च परस्परम्। युयुधुःसङ्गरं कृत्वा क्रोधारु
लुब्धकैश्च हताःकोलाःकोलैश्चापि सुलुब्धकाः।
निहताःपतिता भूमौ क्षतजेनापिसारुणाः ॥ ५२ ॥
जीवंत्यक्त्वा हताःकोलैर्लुब्धकाःपतितारणे। मृताश्चशूकरास्तत्रश्वानःप्रा
यत्रतत्र मृताभूमौ पतिता मृगघातकाः। बहवःशूकरा राज्ञा खड्गपातै
क्षतिनष्टा हताःकोला भीतादुर्गेषु संस्थिताः। कुञ्जेषु कन्दरान्तेषु गुहान्तै

लुब्धकाश्च मृताःकेचिच्छिन्नादंष्ट्राग्रसूकरैः ।
प्राणांस्त्यक्त्वा गतास्वर्गं खण्डशोविदलीकृताः ॥ ५६ ॥
...राःपाशजालाश्च कुटकाःपञ्जरास्तथा । नाड्यश्च पतिताभूमौ यत्रतत्र समन्ततः ॥
...दयितयासार्धं वाराहःपरितिष्ठति । पौत्रकैःपञ्चसप्तभिर्युद्धार्थं वलदर्पितः ॥ ५८ ॥
...ाच तदाक्रान्तं शूकरं शूकरी पुनः । गच्छकान्त मयासार्द्धमेभिस्तु वालकैःसह ॥
प्राहप्रीतो वराहस्तां विवस्तां सुप्रियामिति ।
क्व गच्छामि प्रभग्नोऽहं स्थानंनास्ति महीतले ॥ ६० ॥
नष्टे महाभागे कोलयूथं विनङ्क्ष्यति । द्वयोश्च सिंहयोर्मध्ये जलं पिवति शूकरः
...ःशूकरयोर्मध्ये सिंहोनैव पिवत्यपः । एवं शूकरजातिषु दृश्यते वलमुत्तमम् ॥ ६२ ॥
... नाशयाम्येव यदाभग्नो व्रजाम्यहम् । जाने धर्मं महाभागे वहुश्रेयो विधायकम् ॥
...ल्लोभाद्भयाद्वापि युध्यमानःप्रणश्यति । रणतीर्थंपरित्यज्य सस्यात्पापी न संशयः
...ातं शस्त्रसंव्यूढं दृष्ट्वा हर्षं प्रगच्छति । अवगाह्यामरींसिन्धु तीर्थपारं प्रगच्छति ॥
...ाति वैष्णवंलोकं पुरुषांश्च समुद्धरेत् । समायान्तं च तदहं कथं भग्नो व्रजामि वै ॥
योधनं शस्त्रसङ्कीर्णं प्रवीरानन्ददायकम् ।
दृष्ट्वा प्रयाति संहृष्टस्तस्य पुण्यफलं शृणु ॥ ६७ ॥
...दे महत्स्नानं भागीरथ्याः प्रजायते । रणाद्भग्नो गृहंयाति योलोभाच्च प्रिये शृणु
...शेषं प्रकाशेत स्त्रीजातःपरिकथ्यते । अत्र यज्ञाश्च तीर्थाश्च अत्रदेवा महौजसः ॥
पश्यन्ति कौतुकं कान्ते मुनयःसिद्धचारणाः ।
त्रैलोक्यं वर्तते तत्र यत्र वीरप्रकाशनम् ॥ ७० ॥
...ाङ्गनं प्रपश्यन्ति सर्वे त्रैलोक्यवासिनः । शपन्ति निर्घृणं पापं प्रहसन्ति पुनःपुनः
...ं दर्शयेत्तस्य धर्मराजो न संशयः । सम्मुखःसमरे युद्धे स्वशिरःशोणितं पिवेत् ॥
अश्वमेध फलंभुङ्क्ते इन्द्रलोकं प्रगच्छति ।
यदा जयति सङ्ग्रामे शत्रूञ्छूरो वरानने ॥ ७३ ॥
प्रभुञ्जते लक्ष्मीं नानाभोगांश्चसंशयः । यदा तत्र त्यजेत्प्राणान्सम्मुखःसन्निराश्रयः

सगच्छेत्परमंस्थानं देवकन्यां प्रभुञ्जते। एवं धर्मं विजानामि कथंभद्रो ...
अनेन समरैयुद्धं करिष्ये नात्र संशयः। मनोःपुत्रेण धीरेण राज्ञा इक्ष्वा...
डिम्भान्गृहीत्वा याहि त्वं सुखं जीव वरानने।
तस्य श्रुत्वा वचःप्राह बद्धाहं तवबन्धनैः॥ ७७॥
स्नेह मानरसाख्यैश्च रतिक्रीडनकैःप्रिय। पुरतस्ते सुतैःसार्द्धं प्राणांस्त्यक्ष...
एवमेतौ सुसम्भाष्य परस्पर हितैषिणौ। युद्धाय निश्चितौभूत्वा समालोक...
कोशलाधिपतिं वीरं तमिक्ष्वाकुं महामतिम्॥ ८०॥
यथैव मेघःपरिगर्जतेदिवि प्रावृट्सुकालेषु तडित्प्रकाशैः।
तथैव सङ्गर्जति कान्तयासमं समाह्वयेद्राजवरं खुराग्रैः॥ ८१॥
तं गर्जमानं ददृशो महात्मा वाराहमेकं पुरुषार्थयुक्तम्।
ससार अश्वस्य जवेन युक्तःससम्मुखं तस्य नृवीरधीरः॥ ८२॥
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डेवेनोपाख्यानेसुकलाचरित्रेत्रयश्चत्वा...

———

## चतुश्चत्वारिंशोऽध्यायः

### शूकरस्यसह मनुपुत्रस्ययुद्धकरणम्।

सुकलोवाच।

स्वसैन्यं दुर्धरंदृष्ट्वा निर्जितं दुर्धरेणं तत्। चुकोप भूपतिःक्रूरं दुःसहं...
धनुरादायवेगेन बाणं कालानलोपमम्। तस्याभिमुखमेवासौ हयेनाभिल...
स यदा नृपतिः हयपृष्ठगतं वरपौरुषयुक्तममित्रहणम्।
परिपश्यति शूकरयूथपतिःप्रगतोऽभिमुखं रणभूमितले॥ ३॥
निशितेन शरेण हतो हि यदा नृपतेर्हयपादतले प्रगतः।

तमिहैव विलङ्घ्य च वेगमनाःप्रखरेण जवेन च कोलवरः॥ ४॥

व्यथितस्तुरगःसकिरिःकिटिना न हि याति क्षितौ स हि विद्धगतिः ।
तुरगःपतितो भुवि तुण्डहतो लघुस्यन्दनमेवगतो नृपतिः ॥ ५ ॥
स हि गर्जति शूकरजातिरवैरथसंस्थित कोशलपेनजवात् ।
गदया निहतःकिलभूपतिना रणमध्यगतःसहि यूथपतिः ॥ ६ ॥
परित्यज्य तनुं च स्वकांहि तदा गतएव हरेर्गृहमेव वरम् ॥ ७ ॥
कृत्वा हिं युद्धं समरेहि तेन राज्ञासमं शूकरराजराजः ।
पपात भूमौ च हतो यदा तु ववर्षिरे देववराः सुपुष्पैः ॥ ८ ॥
तस्योर्ध्वगःपुष्पचयःसुजातःसन्तानकानामिव सौरभश्च ।
सकुङ्कुमैश्चन्दनवृष्टिमेव कुर्वन्ति देवाःपरितुष्यमाणाः ॥ ९ ॥
विमृश्यमानःसहितेन राज्ञा चतुर्भुजःसोऽपि बभूव राजन् ।
दिव्याम्बरो भूषणदिव्यरूपःस्वतेजसाभाति दिवाकरो यथा ॥ १० ॥
दिव्येनयानेन दिवंगतो यदा सुपूज्यमानःसुरराज देवैः ।
गन्धर्वराजःसबभूव भूयःपूर्वं स्वकं कायमिहैव हित्वा ॥ ११ ॥
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डेवेनोपाख्यानेसुकलाचरित्रेचतुश्चत्वारिंशोऽध्यायः

---

## पञ्चचत्वारिंशोऽध्यायः

### मनुपुत्रस्य सैनिकैसह शूकर्यायुद्धकरणम् ।

सुकलोवाच ।

ते लुब्धकाःसर्वे शूकरींप्रति जग्मिरे । शूराश्च दारुणाःप्रासाःपाशहस्ताश्च भीषणाः
रश्च ततोडिम्भान्वृत्वा स्थित्वा च शूकरी । कुटुम्बेनसमं कान्तं हतं दृष्ट्वामहाहवे
र्मे चिन्तितं प्राप्तमृषिदेवैश्च पूजितः । गतःस्वर्गं महात्मासौ वीर्येणानेन कर्मणा ॥
अनेनापि पथायास्ये स्वर्गं भर्त्ता सतिष्ठति ।

तथा सुनिश्चितं कृत्वा पुत्रान्प्रति विचिन्तितम् ॥ ४ ॥

यदाजीवन्ति मेबालाश्चत्वारोवंशधारकाः। भवत्यस्य सुवीरस्य कोलस्यामि
केनोपायेन पुत्रान्वै रक्षायुक्तान्करोम्यहम्। इतिचिन्ता पराभूत्वा दृष्ट्वा पर्व
तत्रमार्गंसुविस्तीर्णंनिष्कासायप्रयास्यते। तयासुनिश्चितंकृत्वा पुत्रान्प्रतिवि
तानुवाच महाराज पुत्रान्प्रति सुमोहितान्। यावत्तिष्ठाम्यहं पुत्रास्तावद्गच्छ

तेषांमध्ये सुतोज्येष्ठःकथं यास्यामि मातरम्।

संत्यज्य जीवलोभाच्च धिङ्मे मातःसुजीवितम् ॥ ६ ॥

पितृवैरंकरिष्यामि साधयिष्येरणेरिपून्। गृहीत्वात्वं कनीयसोभ्रातॄंस्त्रीन्
पितरंमातरं त्यक्त्वा यो याति हि सपापधीः। नरकंचप्रयात्येव कृमिकोटि

तमुवाच सुदुःखार्ता त्वां त्यक्त्वाहं कथं सुत।

संयास्यामि महापापा त्रयोगच्छन्तु मे सुताः ॥ १२ ॥

कनीयसस्त्रयस्त्वेव गतागिरि वनान्तरम्। तौ जग्मतू रणभुवं तेषामेव सुप
तेजसा सुबलेनापि गर्जन्तौ च पुनः पुनः। अथ ते लुब्धकाःशूराःसम्प्राप्ता
तथातेनापि दुर्गेण त्रयस्तेप्रेषिता नृप। तिष्ठतःस्मपथंरुद्ध्वा द्वावेतौ अ
लुब्धकाश्च ततःप्राप्ताःखड्गबाण धनुर्धराः। प्रजघ्नुस्तोमरैस्तीक्ष्णैश्चक्रैश्च
मातरं पृष्ठतःकृत्वा तनयोयुध्यतेसतैः। दंष्ट्रयानिहताःकेचित्केचित्तुण्डेन
सजघान खुराग्रैश्च शूराश्च पतितारणे। युयुधे शूकरःसङ्ख्ये दृष्टो राज्ञा
पितुःसकाशाच्छूरोऽयमितिज्ञात्वा ससम्मुखः। बाणपाणिर्महातेजा मनुस

निशितेनापि बाणेन अर्द्धचन्द्रानुकारिणा।

राज्ञाहतःपपातोर्व्यां विद्धोरस्को महात्मना ॥ २० ॥

ममार सहसा भूमौ पपात स हि शूकरः। पुत्रमोहं परं प्राप्ता तस्योपरिगता
तया च निहताःशूरास्तुण्डघातैर्महीतले। निपेतुर्लुब्धकाःशूराःकतिनष्टा सुत

द्रावयन्ती महत्सैन्यं दंष्ट्रया सूकरीततः।



यथाकृत्या समुद्भूता महाभय विधायिका ॥ २३ ॥

वाच ततोराज्ञी देवराज सुतोपमम् । अनया निहतं राजन्महत्सैन्यं तवैव हि ॥२४॥
मादुपेक्षसेकान्त तन्मे त्वं कारणंवद । तामुवाचमहाराजो नाहं हन्मि इमां स्त्रियम्
दोषं प्रियेदृष्टं स्त्रीवधे दैवतैःकिल । तस्मान्नघातयेन्नारीं प्रेषयेऽहं न कंचन ॥२६॥

अस्यावध निमित्तार्थे पापाद्विभेमि सुन्दरि ।
एवमुक्त्वा तदा राजा विरराम महीपतिः ॥ २७ ॥

क्तो झार्झरोनाम०ददृशे स तु सूकरीम् । कुर्वन्तीं कदनं तेषां दुःसहां सुभटैरपि ॥
व्याध सुवेगेन बाणेन निशितेन हि । संलग्ने न तु बाणेन शोणितेन परिप्लुता

शोभमाना त्वरां प्राप्ता वीरश्रिया समाकुला ।
तुण्डेनापि हतःसङ्ख्ये झाझरःस तया पुनः ॥ ३० ॥

ानेन तेनापि झार्झरेण तदाहता । खड्गेन निशितेनापिं पपात विदली कृता ॥३१॥
माना रणेनापि मूर्च्छनाभिपरिप्लुता । दुःखेन महताविष्टा जीवमाना महीतले ॥

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने सुकलाचरित्रे
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः

### श्वसन्त्याशूकर्याः सुदेवयाशीतलजलेन मुखसेचनम् ।

सुकलोवाच ।

न्तींशूकरींदृष्ट्वा पतितांपुत्रवत्सलाम् । सुदेवाकृपयाविष्टा गत्वा तां दुःखितांप्रति

अभिषिच्य मुखं तस्याःशीतलेनोदकेन च ।
पुनःसर्वाङ्गमेवापि दुःखितां रणशालिनीम् ॥ २ ॥

न शीततोयेन सा उवाचाभिषिञ्चतीम् । उवाच मानुषींवाचं सुस्वरं नृपतिप्रियाम्
भवतु ते देवि अभिषिक्ता त्वया यदि । सम्पर्कादृर्शनात्तेऽद्य गतो मे पापसञ्चयः

तदाकर्ण्य महद्वाक्यमद्भुताकारसंयुतम् । चित्रमेतन्मयादृष्टं कृत् तेऽनामथं
पशुजातिमतीचेयं सौष्ठवं भाषतेस्फुटम् । स्वरव्यञ्जनसम्पन्नं संस्कृतमुत्त
हर्षेण विस्मयेनापि कृत्वा साहसमुत्तमम् ।
तत्रस्था सा महाभागा तं पतिं वाक्यमब्रवीत् ॥ ७ ॥
पश्यराजन्नपूर्वेयं संस्कृतं भाषते महत् । पशुयोनिगताचेयं यथा वै मानु
तदाकर्ण्य ततोराजा सर्वज्ञानवतांवरः । अद्भुतमद्भुताकारं यन्नदृष्टं श्रुतं मया
तामुवाच ततोराजा सुदेवां सुप्रियां तदा ।
पृच्छचैनां शुभांकान्ते काचेयं तु भविष्यति ॥ १० ॥
श्रुत्वा तु नृपतेर्वाक्यं सा पप्रच्छ च सूकरीम् ।
का भविष्यसि त्वं भद्रे चित्रं ते दृश्यते बहु ॥ ११ ॥
पशुयोनिगता त्वं वै भाषसे मानुषंवचः । सौष्ठवं ज्ञानसम्पन्नं वद मे पृ
भर्तुश्चापि महाराज भटस्यास्य महात्मनः । कोऽयं धर्मो महावीर्यो गतः
आत्मनश्च स्वभर्तुश्च सर्वं पूर्वानुगं वद । एवमुक्त्वा महाभागा विरराम

शूकर्युवाच ।

यदिपृच्छसि मां भद्रे ममास्य च महात्मनः । तत्सर्वं ते प्रवक्ष्यामि चरितं
अयमेष महाप्राज्ञो गन्धर्वो गीतपण्डितः । रङ्गविद्याधरोनाम सर्वशा
मेरुं गिरिवरश्रेष्ठं चारुकन्दर निर्झरम् । तमाश्रित्य महातेजाःपुलस्त्यो मु
तपश्चचार तेजस्वी निर्व्यलीकेन चेतसा । विद्याधरस्तत्रगतःस्वेच्छया स
तमाश्रित्य गिरिश्रेष्ठं गीतमभ्यसते तदा । स्वरताल समोपेतं सुस्वरं चा
गीतं श्रुत्वा मुनिस्तस्य ध्यानाच्चलित मानसः ।
गायन्तं तमुवाचेदं गीतविद्याधरं प्रति ॥ २० ॥
भवद्गीतेन दिव्येन देवामुह्यन्ति नान्यथा । सुस्वरेण सुपुण्येन तालमानेन
लययुक्तेन भावेन मूर्च्छनासहितेन च । मे मनश्चलितं ध्यानाद्गीतेनानेन
इदस्थानं परित्यज्य अन्यस्थानं व्रजस्वतत् ॥ २३ ॥

गीतविद्याधर उवाच ।

ज्ञानसमंगीतमहमत्र प्रसाधये । दुखंददे न कस्यापि सुखदो नृषु सर्वदा ॥ २४ ॥

गीतेनानेन दिव्येन सर्वास्तुष्यन्ति देवताः ।

शम्भुश्चापि समानीतो गीतध्वनिरतो द्विज ॥ २५ ॥

सर्वरसं प्रोक्तं गीतमानन्ददायकम् । शृङ्गाराद्यारसाःसर्वे गीतेनापि प्रतिष्ठिताः ॥

मायान्तिगीतेन वेदाश्चत्वार उत्तमाः । गीतेनदेवताःसर्वास्तोषमायान्ति नान्यथा

निन्दसे गीतं मामेवं परिचालयेः । अन्यायोऽयं महाभाग तवैव इहदृश्यते ॥२८॥

पुलस्त्य उवाच ।

मुक्तं त्वयाद्यैव गीतार्थं बहुपुण्यदम् । शृणुत्वं मामकं वाक्यं मानं त्यज महामते ॥

गीतं प्रकुत्सामि गीतंवन्दामि नान्यथा । विद्याश्चतुर्दशैवैता एकीभावेन भावदाः

प्राणिनां सिद्धिमायान्ति मनसा निश्चलेन च ।

तपश्च तद्वन्मन्त्राश्चसुसिद्ध्यन्त्येक चिन्तया ॥ ३१ ॥

णाणां महावर्गश्चपलो मम संमतः । विषयेष्वेव सर्वेषु नयत्यात्मानमुच्चकैः॥३२॥

येत्वा मनस्तस्माद्ध्यानादेव न संशयः । यत्रशब्दं न रूपं च युवतीनैव तिष्ठति ॥

मुनयस्तत्र गच्छन्ति तपःसिद्ध्यर्थमेव हि ।

अयंगीतःपवित्रस्ते बहुसौख्यप्रदायकः ॥ ३४ ॥

येम वयं वीर तिष्ठामोवनसंस्थिताः । अन्यत्स्थानंप्रयाहि त्वं नो वा वयं व्रजामहे

गीतविद्याधर उवाच

इन्द्रियाणां बलंवर्गं जितं येन महात्मना ।

स जयी कथ्यते योगी स च वीरःस साधकः ॥ ३६ ॥

त्वाथ वा दृष्ट्वा रूपमेवं महामते । चलतेनैव यो ध्यानात्सधीरस्तपसाधकः ॥

तु तेजसाहीन इन्द्रियैर्विजितोयतः । स्वर्गेऽपि नास्ति सामर्थ्यं मम्गीतस्यधर्षणे

न्ति वनं सर्वे हीनवीर्या न संशयः । अयं साधारणोविप्र वनदेशो न संशयः ॥

वेदानां सर्वज्ञानां यथामम तथातव ।

कथं गच्छाम्यहं त्यक्त्वा वनमेवमनुत्तमम् ॥ ४० ॥
यूयं गच्छन्तु तिष्ठन्तु यद्भव्यं तत्तु नान्यथा । एवमाभाष्य तं विप्रं गीतवि
समाकर्ण्य ततस्तेन मुनिना तस्य उत्तरम् ।
चिन्तयामास मेधावी किंकृत्वा सुकृतं भवेत् ॥ ४२ ॥
क्षमांकृत्वा जगामाथ अन्यत्स्थानं द्विजोत्तमः । तपश्चचार धर्मात्मा योगा
कामंक्रोधं परित्यज्य मोहंलोभं तथैव च । सर्वेन्द्रियाणि संयम्य मनसा
एवं स्थितस्तदायोगी पुलस्त्यो मुनिसत्तमः ॥ ४४ ॥

सुकलोवाच ।

गतेतस्मिन्महाभागे पुलस्त्ये मुनिपुङ्गवे । कालादिष्टेन तेनापि गीतवि
चिन्तितं सुचिरं कालं न दृष्टोऽयं भयान्मम । क्वगतस्तिष्ठते वापि कुरुते
ज्ञात्वा पद्मात्मज सुतमेकान्त वनशालिनम् । गतो वराहरूपेण तस्याश्र
आसनस्थं महात्मानं तेजोज्वालासमाविलम् ।
दृष्ट्वा चकार वै क्षोभं तस्यविप्रस्य भामिनि ॥ ४८ ॥
धर्षयेन्नियतं विप्रं तुण्डाग्रेण कुचेष्टया । पशुं ज्ञात्वा महाराज क्षमते त
मूत्रयेत्पुरतःकृत्वा विष्ठां च कुरुते ततः । नृत्यते क्रीडते तत्र पतति
पशुंज्ञात्वा परित्यक्तो मुनिनातेन भूपते । एकदा तु तथाऽऽयाते तेनरूपे
अट्टाट्टहासेन पुनर्हास्यमेवं कृतं तदा ।
रोदनं च कृतं तत्र गीतं गायति सुस्वरम् ॥ ५२ ॥
तथातमागतं विप्रो गीतविद्याधरं नृप । चेष्टितं तस्य वै दृष्ट्वा घोणीहं
ज्ञात्वा तस्य तु वृत्तान्तं मामेवं परिचालयेत् । पशुंज्ञात्वा मयात्यक्तो दुष्टबु
एवंज्ञात्वा महात्मानं गन्धर्वाधममेव हि । चुकोप मुनिशार्दूलस्तं शशाप
यस्मात्शूकररूपेण मामेवं परिचालयेः ।
तस्माद्व्रज महापाप पापयोनिं तु शौकरीम् ॥ ५६ ॥
शप्तस्तेनापि विप्रेण गतोदेवं पुरन्दरम् । तमुवाच महात्मानं कम्पमानो

ृणुवाक्यं सहस्राक्ष तवकार्यं कृतंमया। तपएव हि कुर्वन्सन्दारुणं मुनिपुङ्गवः ॥
किस्मात्तपःप्रभावात्तु चालितःक्षोभितो मया। शप्तस्तेनास्मि विप्रेणदेवरूपं प्रणाशितम्
शुयोनिं गतंशक्रमामेवं परिरक्षय। ज्ञात्वा तस्य स वृत्तान्तं गीतविद्याधरस्य च ॥
तेनसार्द्धं गतश्चेन्द्रस्तं मुनिं पर्यभाषत।
दीयतामनुग्रहो नाथ सिद्धज्ञोऽसिद्विजोत्तमः ॥ ६१ ।
क्षम्यतां मुनिवर्यास्मिन्क्रियतां शापमोक्षणम् ॥ ६२ ॥

पुलस्त्य उवाच ।

तेसम्प्रार्थितोविप्रो महेन्द्रेणाह हृष्टधीः। वचनात्तव देवेश क्षन्तव्यं च मयापि हि
भविष्यति महाराज मनुपुत्रो महाबलः ॥ ६३ ॥
क्ष्वाकुर्नाम धर्मात्मा सर्वधर्मानुपालकः। तस्यहस्ताद्यदामृत्युरस्यैव च भविष्यति
दैष वैस्वकं देहं प्राप्स्यते नात्रसंशयः। एतत्ते सर्ववृत्तान्तं शूकरस्यनिवेदितम् ॥
त्मनश्च प्रवक्ष्यामि पत्यासार्द्धं शृणुष्व हि। मया च पातकं घोरं कृतंयत्पापयापुरा

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने सुकलाचरित्रे
षट्चत्वारिंशोऽध्यायः ॥ ४० ॥

---

# सप्तचत्वारिंशोऽध्यायः

## शूकर्याआत्मनःपूर्वजन्मचरित्रवर्णनम्

सुकलोवाच ।

पुदेवाचारुसर्वाङ्गी तामुवाचाथ सूकरीम्। पशुयोनिं गतात्वं हि कथंवदसि संस्कृतम्
एवं विधं महाज्ञानं कस्माद्भूतं वदस्व मे। कथं जानासि वै भर्तुश्चरित्रमात्मनःशुभे ॥

शूकर्युवाच ।

शोर्भावेन मोहेन सुप्ताहं वरवर्णिनी। निहता खड्गबाणैश्च पतिवारण मूर्द्धनि ॥ ३ ॥

मूर्च्छयाभि परिक्लिन्ना ज्ञानहीना वरानने। त्वयाभिषिक्ता येनाहं पुण्यहस्तेन
पुण्योदकेन शीतेन तव हस्तगतेन वै। अभिषिक्ते हि मे काये मोहोनष्टो विहा
यथाविनाशं तेजोभिरन्धकारःप्रयाति सः। तथातवाभिषेकेन मम पापंगतं
प्रसादात्तवचार्वङ्गि लब्धं ज्ञानं पुरातनम्। पुण्यांगतिं प्रयास्यामि इति ज्ञातं

श्रूयतामभिधास्यामि पूर्ववृत्तान्तमात्मनः।
यत्कृतं तु मया भद्रे पापया दुष्कृतं बहु ॥ ८ ॥

कलिङ्गाख्य महादेशे श्रीपुरं नामपत्तनम्। सर्वसिद्धि समाकीर्णं चतुर्वर्णनि
वसतिस्म द्विजःकोऽपि वसुदत्त इतिश्रुतः। ब्रह्माचारपरोनित्यं सत्यधर्मप

वेदवेत्ता ज्ञानवेत्ता शुचिमान्गुणवान्धनी।
धनधान्य समाकीर्णःपुत्रपौत्रैरलङ्कृतः ॥ ११ ॥

तस्याहं तनया भद्रे सोदरैःस्वजनबान्धवैः। अलङ्कारैस्तु शृङ्गारैर्भूषिता
सुदेवानाम मे तातश्चकार स महामतिः। तस्याहं दयिता नित्यं पितुश्चापि
रूपेण। प्रतिमाजाता संसारेनास्ति तादृशी। रूपयौवनगर्वेण मत्ताहं चारु

अहंकन्या सुरूपा वै सर्वालङ्कारशोभिता।
मां च दृष्ट्वा ततोलोकाःसर्वे स्वजनवर्गकाः ॥ १५ ॥

मामेवं याचमानास्तेविवाहार्थे वरानने। याचिताहं द्विजैःसर्वैर्नददाति पि
स्नेहाच्चैव महाभागे मुमोह स महामतिः। न दत्ताहं तदातेन पित्राचैव मह
सम्प्राप्तं यौवनं बाले मयि भावसमन्वितम्। रूपमेतादृशं दृष्ट्वा ममामाता सु

पितरंमउवाचाथ कस्मात्कन्या न दीयते।
त्वं कस्मै सुद्विजायैव ब्राह्मणाय महात्मने ॥ १६ ॥

देहि कन्यां महाभाग सम्प्राप्ता यौवनंत्वियम्। वसुदत्तो द्विजश्रेष्ठःप्रत्युवाच
मातरं मे महाभागे श्रूयतां वचनं मम। महामोहेन मुग्धोऽस्मि सुताया

यो मे गृहस्थो विप्रो वै भविष्यति शुभे शृणु।

तस्मै कन्यां प्रदास्यामि जामात्रे तु न संशयः ॥ २२ ॥

[गु]णप्रियाचैषां सुदेवानात्र संशयः। एवमूचे मदर्थेस वसुदत्तःपिता मम ॥ २३ ॥
[...]कस्य कुलेजातःसर्वविद्याविशारदः। ब्राह्मणानांगुणैर्युक्तःशीलवान्गुणवाञ्छुचिः
वेदाध्ययनसम्पन्नं पठमानं हि सुस्वरम्।
भिक्षार्थं द्वारमायान्तं पितृमातृ विवर्जितम् ॥ २५ ॥
[...]वा समनुप्राप्तंरूपंवीक्ष्यमहामतिः। तं प्रोवाच पिताएवं को भवान्वैभविष्यति
[ना]म कुलं गोत्रमाचारं वद साम्प्रतम्। समाकर्ण्य पितुर्वाक्यं वसुदत्तमुवाच सः
[...]कस्यान्वयेजाते वेदवेदाङ्गपारगः। शिवशर्मेति मे नाम पितृमातृविवर्जितः ॥
सन्ति मे भ्रातरश्चान्ये चत्वारोवेदपारगाः।
एवं कुलसमाख्यातमाचारःकुलसम्भवः ॥ २६ ॥
[...]र्थं समाख्यातं पितरं शिवशर्मणा। शुभलग्ने तिथौप्राप्ते नक्षत्रे भगदैवते ॥
[...]त्तास्मि सुभगे तस्मै विप्राय वै तदा। पितृगेहे वसाम्येका तेनसार्द्धं महात्मना
नैव शुश्रूषितो भर्ता मया स पापया तदा।
पितृमातृ सुद्रव्येण गर्वेणापि प्रमोहिता ॥ ३२ ॥
[...]ाहनं तस्य नकृतं हि मयाकदा। रतिभावेन स्नेहेन वचने न मयाशुभे ॥ ३३ ॥
क्रूरबुद्ध्याहि दृष्टोऽसौ सर्वदा पापया मया।
पुंश्चलीनां प्रसङ्गेन तद्भावं हि गताशुभे ॥ ३४ ॥
[...]त्रोश्च भर्तुश्च भ्रातॄणां हितमेव च। न करोम्यहमेवापि यत्रयत्र व्रजाम्यहम् ॥
[...]दुष्कृतं दृष्ट्वा शिवशर्मा पतिर्मम। स्नेहाच्छ्वशुरवर्गस्य ममभर्ता महामतिः ॥
[...]द्भक्ति मां सोऽपि क्षमते दुष्कृतं मम। वार्यमाणा कुटुम्बेन अहमेवं सुपापिनी
तस्यशील विदित्वा ते साधुत्वं शिवशर्मणः।
पितामाता च मे सव ममपापेन दुःखिताः ॥ ३८ ॥
दुष्कृतं दृष्ट्वा स्वगृहान्निर्गतोवहिः। तं देशं ग्राममेनं च परित्यज्य गतस्ततः
[...]रे मे तातःसञ्जातश्चिन्तयान्वितः। ममदुःखेन दुःखात्मा यथारोगेणपीडितः ॥
[...] उवाचैनं भर्तारं दुःखपीडितम्। कस्माच्चिन्तयसे कान्त तद्दुःखं ममाग्रतः ॥

वसुदत्त उवाचैनां मातरं मम नन्दने ।
सुतां त्यक्त्वा गतोविप्रो जामाता शृणु वल्लभे ॥ ४२ ॥
इयं पापसमाचारा निर्घृणा पापचारिणी । अनया हि परित्यक्तःशिवशर्मा
समस्तस्य कुटुम्बस्य दाक्षिण्येन महामतिः । मामार्थं सद्विजःकान्ते सुदे
वसते सौम्यभावेन नैवनिन्दति कुत्सति ।
सुदेवां पापसञ्चारां स वै पण्डितबुद्धिमान् ॥ ४५ ॥
भविष्यतित्वियं दुष्टा सुदेवा कुलनाशिनी । अहमेनां परित्यज्य व्रजामि
ब्राह्मण्युवाच ।
अद्यज्ञातं त्वया कान्त सुताया गुणदूषणम् । तवमोहेन स्नेहेन नष्टेयं
तावद्विलाडयेत्पुत्रं यावत्स्यात्पञ्चवार्षिकः । शिक्षाबुद्ध्या सदाकान्त पुत्
स्नानाच्छादनकैर्भक्ष्यैर्भोज्यैःपेयैर्नसंशयः । गुणेषु योजयेत्कान्त सद्विद्या
गुणशिक्षार्थं निर्मोहः पिताभवति सर्वदा ।
पालने पोषणे कान्त संमोहःपरिजायते ॥ ५० ॥
सगुणं न वदेत्पुत्रं कुत्सयेच्च दिनेदिने । काठिन्यं च वदेन्नित्यं वचनैः
यथा हि साधयेन्नित्यं सुविद्यां ज्ञानतत्परः । अभिमाने छलेनापि पापे
नैपुण्यं जायते नित्यं विद्यासु च गुणेषु च ।
माता च ताडयेत्कन्यां स्नुषां श्वश्रूर्विताडयेत् ॥ ५३ ॥
गुरुश्चताडयेच्छिष्यंततःसिध्यन्तिनान्यथा । भार्यां चताडयेत्कान्त अमा
हयं च ताडयेद्वीरो गजं मात्रोदिनेदिने । शिक्षाबुद्ध्या प्रसिध्यन्ति ताडना
त्वयेयं नाशिता नाथ सर्वदैव न संशयः ।
सार्धं सुब्राह्मणेनापि भवता शिवशर्मणा ॥ ५६ ॥
निरङ्कुशाकृतागेहे तेन नष्टा महामते । तावद्विधारयेत्कन्यां गृहे कान्त
अष्टवर्षान्विता यावत्प्रबलांनैव धारयेत् । पितुर्गेहस्थितापुत्री यत्पापं
उभाभ्यामपितत्पापं पितृभ्यामपि विन्दति । तस्मान्नधार्यते कन्या सम

यस्य दत्ताभवेत्सा च तस्यगेहे प्रपोषयेत्।
तत्रस्था साधयेत्कान्तं सगुणं भक्तिपूर्वकम् ॥ ६० ॥
ास्य जायते कीर्तिःपिता सुखेन जीवति। तत्रस्था कुरुतेपापं तत्पापं भुञ्जतेपतिः ॥
स्था वर्द्धतेनित्यं पुत्रैःपौत्रैःसदैव सा। पिताकीर्तिमवाप्नोति सुतायाःसुगुणैःप्रिय
ान्नधारयेत्कान्त गेहेपुत्रीं सभर्तृकाम्। इत्यर्थे श्रूयते कान्त इतिहासो भविष्यति
ाविंशतिकेप्राप्ते युगेद्वापरके महान्। उग्रसेनस्यवीरस्य यदुज्येष्ठस्य यत्प्रभो ॥६४॥
चरित्रं ते प्रवक्ष्यामि श्रृणुष्वैकमना द्विज ॥ ६५ ॥
इति श्रीपद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने सुकलाचरित्रे
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः

### उग्रसेनराजतनयायाः पद्मावत्याश्चरित्रवर्णनम्।

ब्राह्मण्युवाच।

ुरे विषयेरम्ये मथुरायां नृपोत्तमः। उग्रसेनेति विख्यातो यादवःपरवीरहा ॥ १ ॥
धर्मार्थतत्त्वज्ञो वेदज्ञःश्रुतवान्बली। दाता भोक्ता गुणग्राही सद्गुणान्वेत्ति भूपतिः
यं चकार मेधावी प्रजाधर्मेण पालयेत्। एवं स च महातेजाउग्रसेनःप्रतापवान् ॥
र्मे विषयेपुण्ये सत्यकेतुःप्रतापवान्। तस्यकन्या महाभागा पद्माक्षी कमलानना ॥
नाम्ना पद्मावतीनाम सत्यधर्मपरायणा।
सा तु स्त्रीणांगुणैर्युक्ता द्वितीयेव समुद्रजा ॥ ५ ॥
र्मीं शुशुभे राजन्स्वगुणैःसत्यकारणैः। माथुरउग्रसेनस्तु उपयेमे सुलोचनाम् ॥ ६ ॥
ासह महाभाग सुखंरेमे प्रतापवान्। अतिप्रीतो गुणैस्तस्यास्तयासह सुखी भवेत्॥
तस्याःस्नेहेन प्रीत्या च संमुग्धो माथुरेश्वरः।

पद्मावती महाभागा तस्य प्राणप्रियाऽभवत् ॥ ८ ॥
तयाविना न बुभुजे तयासह प्रक्रीडयेत् । तयाविना न सेवेत परमं सुखमेव सः ।
एवं प्रीतिकरौ जातौ परस्परमनुत्तमौ । स्नेहवन्तौ द्विजश्रेष्ठ सुखसम्प्रीतिदायकौ ।
सत्यकेतुश्च राजेन्द्रःसस्मार सपद्मावतीम् ।
स्वसुतां तां महाभागो माता तस्याःसुदुःखिता ॥ ११ ॥
सदूतान्प्रेषयामास वैदर्भो मथुरांप्रति । उग्रसेनं नृवीरेन्द्रं सादरेण द्विजोत्तम ।
उग्रसेनं महाराजं सदूतो वाक्यमब्रवीत् । विदर्भाधिपतिर्वीरो भक्त्यास्नेहेन नन्द
आत्मनःकुशलंब्रूते भवतां परिपृच्छति । सत्यकेतुर्महाराज त्वामेवं परिपृष्टवान् ।
दर्शनाय प्रेषयस्व सुतांपद्मावतीं मम । यदि त्वं मन्यसेनाथ प्रीतिस्नेहं हि तस्य
प्रेषयस्व महाभागां प्रियां प्रीतिकरां तव । औत्कण्ठ्येन महाराज सशोकेनानुव
समाकर्ण्य ततोवाक्यमुग्रसेनो नृपोत्तमः ।
प्रीत्यास्नेहेन तस्यापि सत्यकेतोर्महात्मनः ॥ १७ ॥
दाक्षिण्येन च विप्रेन्द्र प्रेषयामास भूपतिः । पद्मावतीं प्रियांभार्यामुग्रसेनःप्रताप
प्रेषितानेन राजेन्द्र गतापद्मावती स्वकम् । पूर्वं गृहं सती सा तु महाहर्षेण संयु
पितृपूर्वं कुटुम्बं तु ददृशे चारुमङ्गला । पितुःपादौ ननामाथ शिरसा सत्यव
आगतायां महाराजःपद्मावत्यां द्विजोत्तम । हर्षेण महताविष्टो विदर्भाधिपति
वर्द्धिता दानमानैश्च वस्त्रालङ्कारभूषणैः । पद्मावती सुखेनापि पितुर्गेहे प्रवर्तते ॥
सखीभिःसहिता सा तु निःशङ्का परिवर्तते । रमते सा तदा तत्र यथापूर्वं तथैव
गृहेवने तडागेषु प्रासादे च तथैव सा । पुनर्बालेव भूतासा निर्लज्जा सम्प्रवर्तते ॥
निःशङ्का वर्ततेविप्र सखीभिःसह सर्वदा । पतिव्रता महाभागा हर्षेणमहताऽन्वि
सुखं तु पितृगेहस्य दुर्लभं श्वाशुरेगृहे । एवं ज्ञात्वा तदारेमे कदाईदृग्भविष्यति ।
अनेन मोहभावेन क्रीडालुब्धा वरानना । सखीभिःसहिता नित्यं वनेषूपवने
इतिश्री पाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने सुकलाचरित्रे
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## ऊनपञ्चाशत्तमोऽध्यायः

### पद्मावत्याश्चरित्रवर्णनम् ।

ब्राह्मण्युवाच ।

कदा तु महाभाग गता सा पर्वतोत्तमे । रमणीयं वनंदृष्ट्वा कदलीखण्डमण्डितम् ॥

शालैस्तालैस्तमालैश्च नारिकेरैस्तथोत्कटैः ।

पूगीफलैर्मातुलिङ्गैर्नारङ्गैश्चारुजम्बुकैः ॥ २ ॥

चम्पकैःपाटलैःपुण्यैःपुष्पितैःकुटकैर्वटैः । अशोकबकुलोपेतं नानावृक्षैरलङ्कृतम् ॥ ३ ॥

पर्वतंपुण्यवन्तंतं पुष्पितैश्च नरोत्तमैः । सर्वत्र दृश्यतेरम्यो नानाधातु समाकुलः ॥ ४ ॥

तडागं सर्वतोभद्रं पुण्यतोयेन पूरितम् । कमलैःपुष्पितैश्चान्यैः सुगन्धैः कनकोत्पलैः

श्वेतोत्पलैर्विभासन्तं रक्तोत्पल सुपुष्पितैः। नीलोत्पलैश्चकह्लारैर्हंसैश्च जलकुक्कुटैः ॥

पक्षिभिर्जलजैश्चान्यैर्नानाधातुसमाकुलः । तडागं सर्वतःशुभ्रं नानापक्षिगणैर्युतम् ॥ ७ ॥

कोकिलानांरुतैःपुण्यैःसुस्वरैःपरिशोभितः । मधुराणां तथा शब्दैः सर्वत्रमधुरायते ॥ ८ ॥

षट्पदानां सुनादेन सर्वत्र परिशोभते । एवंविधंगिरिंरम्यं तदेववनमुत्तमम् ॥ ९ ॥

तडागं सर्वतोभद्रं ददृशेनृपनन्दिनी । वैदर्भीक्रीडमाना सा सखीभिः सहिता तदा ॥

समालोक्य वनंपुण्यं सर्वत्र कुसुमाकुलम् । चापल्येन प्रभावेन स्त्रीभावेन च लीलया

पद्मावती सरस्तीरे सखीभिःसहिता तदा । जलक्रीडा समालीना हसते गायते पुनः ॥

सुखेन रममाणा सा तस्मिन्सरसि भामिनी । एवं विप्र तदा सा तु सुखेन परिवर्तयेत्

गोभिलोनाम वै दैत्यो भृत्यो वैश्रवणस्य च । दिव्येनापि विमानेनसर्वभोग परिप्लुतः

याति चाकाशमार्गेण गोभिलोदैत्यसत्तमः ।

तेनदृष्टा विशालाक्षी वैदर्भीनिर्भया तदा ॥ १५ ॥

सर्वयोषिद्वरा सा हि उग्रसेनस्य वै प्रिया । रूपेणाप्रतिमालोके सर्वाङ्गेषु विराजते ॥

रतिर्वैमन्मथस्यापि किंवापियं हरिप्रिया । किंवापि पार्वतीदेवी शची किंवाभविष्यति

याद्दशीद्दश्यते चेयं नारीणां प्रवरोत्तमा । अन्यापि ईद्दशीनास्ति द्वितीया क्षिति
नक्षत्रेषु यथाचन्द्रः सम्पूर्णोभाति शोभनः । गुणरूपकलाभिस्तु तथाभातिवरा
पुष्करेषु यथाहंसस्तथेयं चारुहासिनी । अहोरूपमहोभाव अस्यास्तु परि

का कस्य शोभनाबाला चारुवृत्तपयोधरा ।
व्यमृशद्गोभिलो दैत्यःपद्मावतीं वराननाम् ॥ २१ ॥

चिन्तयित्वा क्षणंविप्र का कस्यापि भविष्यति । ज्ञानेन महताज्ञात्वावैदर्भीति
दयिता उग्रसेनस्य पतिव्रतपरायणा । आत्मबलेन तिष्ठन्ती दुष्प्राप्या पुरु
उग्रसेनो महामूर्खःप्रेषिता येन वै वरा । पितुर्गेहमियं बाला सतु भाग्येन व
अनया विनासजीवेच्च कथं कूटमतिःसदा । किं वा नपुंसकोराजा एनांयोहिप

तां दृष्ट्वा स तु कामात्मा सञ्जातस्तत्क्षणादपि ।
इयं पतिव्रता बाला दुष्प्राप्या पुरुषैरपि ॥ २६ ॥
कथं भोक्ष्याम्यहं गत्वा कामोमामतिपीडयेत् ।
अभुक्त्वैनां यदायास्ये तत्स्यान्मृत्युर्ममैव हि ॥ २७ ॥

अद्यैव हि न सन्देहो यतःकामो महाबलः । इतिचिन्ता परोभूत्वा गोभिलो म
कृत्वा मायामयंरूपमुग्रसेनस्य भूपतेः । याद्दशस्तूग्रसेनश्च साङ्गोपाङ्गो मह
गोभिलस्ताद्दशोभूत्वा गत्याच स्वरभाषया । यथावस्त्रो यथावेशो वयसा च
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः । सर्वाभरणशोभाङ्गो याद्दशो माथु
भूत्वाऽथ ताद्दशोदैत्य उग्रसेनमयस्तदा । मायया परयायुक्तो रूपलावण्य स

पर्वताग्रे अशोकस्य च्छायामाश्रित्य संस्थितः ।
शिलातलस्थोदुष्टात्मा वीणादण्डेन वीरकः ॥ ३३ ॥

सुस्वरं गायमानस्तु गीतं विश्वप्रमोहनम् । तालमान क्रियोपेतं सप्तस्वर
गीतं गायति दुष्टात्मा तस्यारूपेणमोहितः । पर्वताग्रेस्थितो विप्र हर्षेणमहता

सखीमध्यगता सा तु पद्मावती वरानना ।

शुश्रुवे सुस्वरं गीतं तालमानलयान्वितम् ॥ ३६ ॥

गायति धर्मात्मामहत्सौख्यप्रदायकम्। गीतंहिसत्क्रियोपेतंसर्वभावसमन्वितम्

सखीभिःसहिता गत्वा औत्सुक्येन नृपात्मजा।

अशोकच्छायामाश्रित्य विमले सुशिलातले ॥ ३८ ॥

भूपवेषेण गोभिलं दानवाधमम् । पुष्पमालाम्बरधरं दिव्यगन्धानुलेपनम् ॥

भरणशोभाङ्गं पद्मावती पतिव्रता । मथुरेशःसमायातःकदा धर्मपरायणः ॥

ममनाथो महात्मा वै राज्यंत्यक्त्वा प्रदूरतः।

यावद्धि चिन्तयेत्सा च तावत्पापेन तेन सा ॥ ४१ ॥

समाहूताऽऽतुरीभूय एहित्वं हि प्रिये मम।

चकिता शङ्किता सा च कथंभर्त्ता समागतः ॥ ४२ ॥

ता दुःखिताजाता अधःकृत्वा ततोमुखम्। अहं पापादुराचारा निःशङ्कापरिवर्तिता

मेवं महाभागःकरिष्यति न संशयः। यावद्धिचिन्तयेत्साच तावत्तेनापि पापिना

हूताऽऽतुरीभूय एह्येहि त्वं ममप्रिये। त्वयाविना कृतोदेवि प्राणान्धर्तुं वरानने

न हि शक्नोम्यहं कान्ते जीवितं प्रियमेव च।

तपस्नेहेन लुब्धोऽस्मि त्वां त्यक्त्वा नोत्सहे भृशम् ॥ ४६ ॥

ब्राह्मण्युवाच।

का गताऽपश्यत्सुमुखं लज्जयान्विता। समालिङ्ग्य ततोदैत्यःसतीं पद्मावतींतदा

न्तं तु समानीता सुभुक्ता इच्छयाततः। दैत्येन गोभिलेनापि सत्यकेतोःसुतातदा

सुकलोवाच।

स्थानेऽस्यसङ्केतं नाविन्दत वरानना। स्ववस्त्रं सापरिगृह्यशङ्किताद‌ुःखिताह्यभूत्

सक्रोधावचःप्राह गोभिलं दानवाधमम्। कस्त्वंपापसमाचारोनिर्घृणोदानवाकृतिः

कामा समुद्युक्ता दुःखेना कुलितेक्षणा। त्रपमाना रुदाराजन्दुःखभारेण पीडिता

कान्तच्छलेनैव त्वयाऽगत्य दुरात्मदन्। नाशितं धर्ममेवाग्रं पातिव्रत्यमनुत्तमम्

सुस्वरं रुदितंकृत्वा ममजन्म त्वयाहृतम्।

पश्य मे बलमत्रैव शापं दास्ये सुदारुणम् ॥ ५२ ॥

एवं सम्भाषमाणा तं शप्तुकामा तु गोभिलम् ॥ ५४ ॥
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने सुकलाचरित्रे
एकोनपञ्चाशत्तमोऽध्यायः ।

---

## पञ्चाशत्तमोऽध्यायः

### पद्मावत्याश्चरित्रवर्णनम् ।

सुकलोवाच ।

तस्यास्तु वचनं श्रुत्वा गोभिलो वाक्यमब्रवीत् ।
भवती शप्तुकामासि कस्मान्मे कारणं वद ॥ १ ॥
केनदोषेण लिप्तोऽस्मि यस्मात्त्वं शप्तुमुद्यता ।
गोभिलोनामदैत्योऽस्मि पौलस्त्यस्यभटःशुभे ॥ २ ॥

दैत्याचारेण वर्तामि जानेविद्यामनुत्तमाम् । वेदशास्त्रार्थ वेत्तास्मि कलासु
एवं सर्वं विजामामि दैत्याचारं शृणुष्वमे । परस्वं परदारांश्च बलाद्भुञ्जामि
वयं दैत्याःसमाकर्ण्य दैत्याचारेणसाम्प्रतम् । वर्तामोज्ञातिभावेन सत्यंसत्यं

ब्राह्मणानां हि च्छिद्राणि विपश्यामो दिने दिने ।
तेषां हि तपसोनाशं विघ्नैःकुर्मो न संशयः ॥ ६ ॥

छिद्रं प्राप्य वयं देवि नाशयामो न संशयः । ब्राह्मणाच्छ्रूयतां भद्रे देवयज्ञं
नाशयामो वयंयज्ञान्धर्मयज्ञं न संशयः । सुब्राह्मणान्परित्यज्य देवंनारायणं
पतिव्रतां महाभागां सुमतिं भर्तृतत्पराम् । दूरेणापि परित्यज्य तिष्ठामो
तेजो देवि सुविप्रस्य हरेश्चैव महात्मनः । नार्याःपतिव्रतायाश्च सोढुं दैत्या

पतिव्रताभयेनापि विष्णोःसुब्राह्मणस्य च ।
नश्यन्ति ब्राह्मणाःसर्वे दूरं राक्षस पुङ्गवाः ॥ ११ ॥

[स्व]धर्मेण विचरासि महीतलम् । कस्मात्त्वं शप्तुकामासि ममदोषोविचार्यताम्

पद्मावत्युवाच ।

[स्व]धर्मःसुकायश्च त्वयैव परिनाशितः । अहं पतिव्रतासाध्वी पतिकामा तपस्विनी ॥

स्वमार्गे संस्थिता पापमायया परिनाशिता ।

तस्मात्त्वामप्यहं दुष्ट आधक्ष्यामि न संशयः ॥ १४ ॥

गोभिल उवाच ।

[ध]र्ममेव प्रवक्ष्यामि भवती यदि मन्यते । अग्निचिद्ब्राह्मणस्यापि श्रूयतां नृपनन्दिनि ॥

[अ]ग्न्देवं द्विकालं यो न त्यजेदग्निमन्दिरम् । सचाग्निहोत्री भवति यजत्येव दिनेदिने

[भृ]त्यच्चैवं प्रवक्ष्यामि भृत्यधर्मं वरानने । मनसाकर्मणावाचा विशुद्धोयोऽपि नित्यशः

[स्वा]म्यमादेशकारीयः पश्चातिष्ठति चाग्रतः । स भृत्यःकथ्यते देवि पुण्यभागी नसंशयः

[यः] पुत्रो गुणवाञ्ज्ञाता पितरं पालयेच्छुभः । मातरं च विशेषेण मनसा कायकर्मभिः

तस्यभागीरथी स्नानमहन्यहनि जायते ।

अन्यथा कुरुते योहि स पापीस्यान्न संशयः ॥ २० ॥

[प]त्यच्चैवं प्रवक्ष्यामि पतिव्रतमनुत्तमम् । वाचासुमनसाचैव कर्मणा शृणु भामिनि

[शु]श्रूषां कुरुते याहि भर्तुश्चैव दिने दिने । तुष्टेभर्त्तरि या प्रीता न त्यजेत्क्रोधनं पुनः ॥

तस्य दोषं न गृह्णाति ताडिता तुष्यते पुनः ।

भर्त्तुःकर्म सुसर्वेषु पुरतस्तिष्ठते सदा ॥ २३ ॥

[सा] चापि कथ्यते नारी पतिव्रतपरायणा । पतितोऽपि पितापुत्रैर्बहुदोषसमन्वितः ॥

कस्मादपि च न त्याज्यःकुष्ठितःक्रुधितोऽपि वा ।

एवं पुत्राःशुश्रूषन्ति पितरं मातरं किल ॥ २५ ॥

[ते] यान्ति परमंलोकं तद्विष्णोःपरमं पदम् । एवं हि स्वामिनं येवै उपाचरन्तिभृत्यकाः

[वि]ष्णुलोकं प्रयान्त्येते प्रसादात्स्वामिनस्तदा । अग्निनैव त्यजेद्विप्रो ब्रह्मलोकंप्रयातिसः

[अग्]निनत्यागकरोविप्रोवृषलीपतिरुच्यते । स्वामिद्रोहीभवेद्भृत्यःस्वामित्यागान्नसंशयः

[मा]तरं च पितरं चैव न त्यजेत्स्वामिनं शुभे । सदाविप्रःसुतोभृत्यःसत्यंसत्यंवदाम्यहम्

परित्यज्यप्रगच्छन्ति ते यान्ति नरकार्णवम् । पतितं व्याधितं देवि विकलं कुष्ठि
सर्वकर्मविहीनं च गतवित्तादि सञ्चयम् । भर्तारं न त्यजेन्नारी यदिश्रेयइहेच्छ
त्यक्त्वा कान्तं व्रजेन्नारी अन्यत्कार्यमिहेच्छति ।
सा माता पुंश्चलीलोके सर्वधर्मबहिष्कृता ॥ ३२ ॥
गते भर्तरि या ग्रामं भोगं शृङ्गारमेव च । लौल्याच्च कुरुते नारी पुंश्चली वदते
एवं धर्मं विजानामि वेदशास्त्रैश्च संमतम् । दानवा राक्षसाःप्रेता धात्रा सृष्टा य
तत्रेह कारणं सर्वं प्रवक्ष्यामि न संशयः । ब्राह्मणा दानवाश्चैव पिशाचाश्चैवराक्षस
धर्मार्थं सकलं प्रोक्तमधीतंस्तैस्तु सुन्दरि । विन्दन्तिसकलं सर्वे आचरन्ति न
विधिहीनं प्रकुर्वन्ति दानवा ज्ञानवर्जिताः । अन्यायेन व्रजन्त्येते मानवा विधिव
तेषां शासनहेत्वर्थं कृता एतेऽपिनान्यथा । विधिहीनं प्रकुर्वन्ति ये हि धर्मं न
तान्वयं शासयामो वै दण्डेन महता किल । भवत्या दारुणं कर्म कृतमेव सुनिर्घृ
गार्हस्थ्यं च परित्यज्य अत्रायाता किमर्थतः । वदत्येवं मुखेनापि अहं हि प
कर्मणानास्ति तद्दृष्टं पतिदैवत्यमेव ते ।
भर्तारं तं परित्यज्य किमर्थं त्वमिहागता ॥ ४१ ॥
शृङ्गारं भूषणं वेषं कृत्वा तिष्ठसि निर्घृणा । किमर्थं हि कृतं पापे कस्य हेतोर्व
निःशङ्का वर्त्तसेचापि प्रमत्ता गिरिकानने । मया त्वं साधिता पाप दण्डेन मह
अधर्मचारिणी दुष्टा पतिं त्यक्त्वा समागता । क्वास्ते तत्पतिदेवत्वं दर्शयत्वं म
भवती पुंश्चलीनाम ययात्यक्तःस्वकःपतिः । पृथक्छय्या यदानारी तदा सा पुंश्च
योजनानां शतैकस्य सोऽन्तरेण प्रवर्त्तते । क्वास्ति ते पतिदैवत्यं पुंश्चल्याचार
निर्लज्जेतिर्घृणे दुष्टे किं मे वदसिसंमुखी । तपसःक्वास्ति ते भावः क्व तेजो ब
दर्शयस्व ममाद्यैव बलवीर्यं पराक्रमम् ॥ ४८ ॥
पद्मावत्युवाच ।
स्नेहेनापिसमानीता श्रूयतामसुराधम । भर्तुर्गेहादहं पित्रा क्वास्ते तत्र च पा
नैवकामान्नलोभाच्च न मोहान्न च मत्सरात् ।

आगताऽहं पतिं त्यक्त्वा पतिभावेन संस्थिता ॥ ५० ॥
रूपच्छलेनापि त्वयैव परिवञ्चिता । भवन्तं माथुरं ज्ञात्वा गताऽहं सम्मुखं तव ॥
विनं यदा जाने त्वामेवं दानवाधम । एकेन हुङ्कृतेनैव भस्मीभूतं करोम्यहम् ॥

गोभिल उवाच ।

हीना न पश्यन्ति मानवाः शृणु साम्प्रतम् । धर्मनेत्रविहीनात्वंकथंजानासिमामिह
ते भावउत्पन्नः पितुर्गेहं प्रति शृणु । पतिध्यानं परित्यज्य मुक्ताध्यानेनत्वं तदा ॥
नेत्रं तदानष्टं स्फुटं च हृदये तव । कथं मां त्वं विजानासि ज्ञानचक्षुर्हता भुवि ॥
कस्या माता पिता भ्राता कस्याः स्वजनबान्धवाः ।
सर्वस्थाने पतिर्ह्येको भार्यायास्तु न संशयः ॥ ५६ ॥
क्त्वा हि प्रहस्यैव गोभिलोदानवाधमः । न भयं विद्यते तेऽद्य ममापि शृणु पुंश्चलि
किं भवेत्तव शापेन वृथैव परिकम्पसे ।
ममगेहं समाश्रित्य भुङ्क्ष्वभोगान्मनोऽनुगान् ॥ ५८ ॥

पद्मावत्युवाच ।

गच्छ पापसमाचार किं त्वं वदसि निर्घृणः ।
सतीभावेन संस्थास्मि पतिव्रतपरायणा ॥ ५९ ॥
मि त्वां महापाप यद्येवं तु वदिष्यसि । एवमुक्त्वा तथैकान्ते निषसाद महीतले
न महताविष्टां तामुवाच सगोभिलः । तवोदरे मयान्यस्तं स्ववीर्यं सुकृतं शुभे ॥
दुत्पत्स्यते पुत्रस्त्रैलोक्यक्षोभकारकः । एवमुक्त्वाजगामाथ गोभिलोदानवस्तदा
तस्मिन्दुराचारे दानवे पापचारिणी । दुःखेन महताविष्टा नृपकन्या रुरोदह ॥६३॥
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने सुकलाचरित्रे
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

# एकपञ्चाशत्तमोऽध्यायः

ज्ञातदोषायाः पद्मावत्याः पतिगृहंप्रतिप्रेषणम् ।

ब्राह्मण्युवाच ।

गते तस्मिन्दुराचारे गोभिले पापचेतसि । पद्मावती रुरोदार्थदुःखेन महता

तस्यास्तु रुदितं श्रुत्वा सख्यःसर्वा द्विजोत्तम ।
पप्रच्छुस्तां राजकन्यां ताःसर्वाश्च वरानना: ॥ २ ॥

कस्माद्रोदिषिभद्रं ते कथयस्व हि चेष्टितम् । क्व गतोऽसौ महाराजोमाथुराधि
येन त्वं हि समाहूता प्रियेत्युक्त्वावदस्व नः । ता उवाच सुदुःखेन रोदमाना
तया आवेदितं सर्वं यज्जातं दोषसम्भवम् । ताभिर्नीता पितुर्गेहं वेपमाना सुदु

मातुःसमक्षं तस्यास्तु आचचक्षुस्तदा स्त्रियः ।
समाकर्ण्य ततो देवी गता सा भर्तृमन्दिरम् ॥ ६ ॥

भर्तारं श्रावयामास सुता वृतान्तमेव हि । समाकर्ण्य ततोराजा महादुःखी
यानाच्छादनकं दत्त्वा परिवार समन्विताम् । मथुरां प्रेषयामास गता सा प्रिय
सुतादोषं समाच्छाद्य पितामाताद्विजोत्तमः । उग्रसेनस्तुधर्मात्मा पद्मावतीं स

स दृष्ट्वा मुमुदेचाशु उवाचेदं वचः पुनः ।
त्वया विना न शक्तोऽस्मि जीवितुं हि वरानने ॥ १० ॥

वहुप्रभासि मे प्रीतागुणशीलैस्तुसर्वदा । भक्त्यासत्येन ते कान्ते पतिदेवत्य
समाभाष्य प्रियां भार्यां पद्मावतीं नरेश्वरः । तयासार्धं स वै रेमे उग्रसेनो
ववृधे दारुणो गर्भःसर्वलोक भयप्रदः । पद्मावती विज्ञानाति तस्य गर्भस्य
स्वोदरे वर्द्धमानस्य चिन्तयन्ती दिवानिशम् । अनेन किमुजातेन लोकनाशक

अनेनापि न मे कार्यं दुष्टपुत्रेण साम्प्रतम् ।
ओषधीं पृच्छते सा तु गर्भपातस्य सर्वतः ॥ १५ ॥

महौषधीं सा हि विन्दन्ती च दिनेदिने । गर्भस्य पातनायैव उपाया बहुशःकृताः॥
धे दारुणोगर्भःसर्वलोक भयङ्करः । तामुवाच ततो गर्भःपद्मावतीं च मातरम् ॥१७॥
सात्त्वं व्यथसे मातरोषधीभिर्दिनेदिने । पुण्येन वर्द्धतेचायुःपापेनाल्पं तु जीवितम्
आत्मकर्म विपाकेन जीवन्ति च म्रियन्ति च ।
आमगर्भाःप्रयान्त्यन्ये अपक्वास्तु महीतले ॥ १६ ॥
मात्राम्रियन्तेऽन्येकति ते यौवनान्विताः । बालावृद्धाश्चतरुणा आयुषोवशतांगताः
सर्वे कर्मविपाकेन जीवन्ति च म्रियन्ति च ।
ओषध्यो मन्त्रदेवाश्च निमित्ताःस्युर्न संशयः ॥ २१ ॥
मेव हि न जानासि भवती यादृशो ह्यहम् । दृष्टःश्रुतस्त्वया पूर्वकालनेमि महाबलः ॥
वानां महावीर्यस्त्रैलोक्यस्य भयप्रदः । देवासुरे महायुद्धे हतोऽहं विष्णुना पुरा ॥
धयितुं च तद्वैरमागतोऽस्मि तवोदरम् । साहसं च श्रमं मातर्माकुरुष्व दिनेदिने ॥
मुक्त्वा द्विजश्रेष्ठ मातरं विरराम सः । मातोद्यमं परित्यज्य महादुःखादभूत्तदा ॥
ब्दाश्च गता यावत्तावद्वृद्धिमवाप्तवान् । पश्चाज्जज्ञे महातेजाःकंसोऽभूत्समहाबलः
येन सन्त्रासिता लोकास्त्रैलोक्यस्य निवासिनः ।
यो हतो वासुदेवेन गतो मोक्षं न संशयः ॥ २७ ॥
श्रुतं मयाकान्त भविष्यं तु भविष्यति । पुराणेष्वेव सर्वेषु निश्चितं कथितं तव ॥
गेहेस्थिताकन्या नाशमेवंप्रयाति सा । गृहावासाय मे कान्तकन्यामोहं न कारयेत्
दुष्टां महापापां परित्यज्य स्थिरोभव । प्राप्तव्यं तु महापापं दुःखं दारुणमेव च ॥
लोके श्रेयस्करं कान्त तद्भुङ्क्ष्व त्वं मयासह ॥ ३१ ॥

शूकर्युवाच ।

वाक्यंसुमन्त्रं तु श्रुत्वा स हि द्विजोत्तमः। त्यागेमतिं चकारासौ समाहूता ह्यहंतदा
लं वस्त्रश्रृङ्गारं ममदत्तं शुभे शृणु । तवैव दुर्नयैर्विप्रःशिवशर्माद्विजोत्तमः ॥ ३३ ॥
गतो वै मतिमान्दुष्टे कुलदुष्टे प्रचारिणि ।



यत्र ते तिष्ठते भर्ता तत्र गच्छ न संशयः ॥ ३४ ॥

तव यद्रोचते स्थानं यथादिष्टं तथा कुरु। एवमुक्त्वा महाभागे पितृमातृ कु
परित्यक्ता गताशीघ्रं निर्लज्जाहं वरानने। न लभाम्यहमेवापि वासस्थानं सु
भर्त्सयन्ति च मां लोकाःपुंश्चलीयं समागता। अहमाजा गतादेशात्कुलमानेन

देशे गुर्जरके पुण्ये सौराष्ट्रे शिवमन्दिरे।

वनस्थलेति विख्यातं नगरं वृद्धिसङ्कुलम्॥ ३८॥

अतीव पीडिता देवि क्षुधयाहं तदा शृणु। कर्परं हि करेगृह्य भिक्षार्थमुपचक्र
गृहिणां द्वारदेशेषु प्रविशामिसुदुःखिता। ममरूपंविपश्यन्ति लोकाःकुत्सन्ति
न ददते च मे भिक्षां पापाचेयं समागता। एवं दुःख समाहारा दारिद्र्य प
अटन्त्या च मयादृष्टं गृहमेकमनुत्तमम्। तुङ्ग प्राकार संवेष्टं वेदशालासम
वेदध्वनि समाकीर्णं बहुविप्र समाकुलम्। धनधान्य समाकीर्णं दासीदासै
प्रविवेश गृहं रम्यं लक्ष्मीमुदितमेवतत्। तद्गृहं सर्वतोभद्रं तस्यैव शिवशर्म

भिक्षां देहीत्युवाचाथ सुदेवा दुःखपीडिता।

शिवशर्माथ शुश्राव भिक्षाशब्दं द्विजोत्तमः॥ ४५॥

मङ्गलांनाम वै भार्यां लक्ष्मीरूपांवराननाम्। तां हसन्प्राह धर्मात्मा शिवशर्मा
इयं हि दुर्बलाप्राप्ता भिक्षार्थं द्वारमागता। समाहूय प्रिये चैनां देहि त्वं भोज

कृपया परयाऽऽविष्टा ज्ञात्वा मां तु समागताम्।

प्रोवाच मङ्गला कान्तं दास्यामि प्रियभोजनम्॥ ४८॥

एवमुक्त्वा च भर्तारं मङ्गला मङ्गलान्विता। पुनर्मां भोजयामास मिष्टान्नेन
मामुवाचसधर्मात्मा शिवशर्मामहामुनिः। का त्वमत्र समायाताकस्य वा भ

केन कार्येण सर्वत्र कथयस्व ममाग्रतः।

एवमाकर्ण्य तद्वाक्यं भर्तुश्चैव महात्मनः॥ ५१॥

स्वरेण लक्षितःकान्तो मया वै पापया तदा।

व्रीडयाधोमुखी जाता दृष्टो भर्ता यदा मया॥ ५२॥



मङ्गला चारुसर्वाङ्गी भर्तारमिदमब्रवीत्।

काचेयं हि समाचक्ष्व त्वां दृष्ट्वा हि विलज्जति ॥ ५३ ॥
कथयस्व प्रसादेन का च एषा भविष्यति ॥ ५४ ॥
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने सुकलाचरित्रे
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशत्तमोऽध्यायः

### स्वसपत्न्याः पातिव्रत्यदर्शनेन व्रीडितायाः सुदेवायामरणम् ।

शिवशर्मोवाच ।

सुमङ्गले श्रूयतां वाक्यं यदिपृच्छसि साम्प्रतम् । यदर्थं हि त्वया पृष्टं तन्निबोधवरानने
इयं हि साम्प्रतं प्राप्ता वराकी भिक्षुरूपिणी । वसुदत्तस्य विप्रस्य सुतेयं चारुलोचने
सुदेवानाम भद्रेयं मम जाया प्रिया सदा । केनापि कारणेनैव देशंत्यक्त्वा समागता
मद्दुःखेन दग्धेयं वियोगेन वरानने । मां ज्ञात्वा तु समायाता भिक्षुरूपेण तेगृहम्
एवं ज्ञात्वा त्वया भद्रे आतिथ्यं परिशोभितम् ॥
कर्त्तव्यं न च सन्देह इच्छन्त्या मम सुप्रियम् ॥ ५ ॥
भर्तुर्वाक्यं निशम्यैव मङ्गलापतिदेवता । हर्षेण महताविष्टा स्वयमेव सुमङ्गला ॥
स्नानाच्छादन भोज्यं च मम चक्रे वरानने । रत्नकाञ्चनयुक्तैश्चाभरणैश्च पतिव्रता ॥
अहं हि भूषिता भद्रे तथैव पतिकाम्यया ।
तयाहं भूषिता देवि मानस्नानैश्च भोजनैः ॥ ८ ॥
भर्त्राहं मानिता देवि जातंदुःखमनन्तकम् । ममोरसि महातीव्रं सर्वप्राणि विनाशनम्
हस्यामानो मयादृष्टो दुःखमात्मगतं तथा । चिन्ता मे दारुणाजाताथयाप्राणाव्रजन्तिमे
कदापि वचनं दत्तं न मया प्राग्वा शुभम् । अस्यैव विप्रवर्यस्य आचरन्त्याचदुष्कृतम्
पादप्रक्षालनंनैव अङ्गसंवाहनं न हि । एकान्तं न मयादत्तं तस्यैव हि महात्मनः ॥

सम्भाषां कथमस्यैव करिष्ये पापनिश्चया।
रात्रौचैव तदा तत्र पतिता दुःखसागरे॥ १३॥
एवं हि चिन्तमानायाःस्फुटितं हृदयं मम। गताःप्राणास्तदा कायं परित्यज्य
तत्र दूताःसमायाता धर्मराजस्य वै तदा। वीराश्च दारुणाःक्रूरा गदाचक्रासिधा
तैस्तु बद्धा महाभागे श्रृङ्खलैर्दृढबन्धनैः।
नीता यमपुरं तैस्तु रुदमाना सुदुःखिता॥ १६॥
मुद्गरैस्ताड्यमानाहं दुर्गमार्गेण पीडिता। भर्त्स्यमाना यमस्याग्रे तैस्तत्राहं प्र
दृष्टाहं यमराजेन सक्रोधेन महात्मना। अङ्गारसञ्चये क्षिप्ताक्षिप्ता नरकस
लोहस्य पुरुषं कृत्वा अग्निना परितापितः। ममोरसिं समुत्क्षिप्तो निजभर्तुश्च
नानापीडातिसन्तप्ता नरकाग्नि प्रतापिता। तैलद्रोण्यां परिक्षिप्ता करम्भ वालु
असिपत्रैश्च संच्छिन्ना जलयन्त्रेण वाहिता।
कूटशाल्मलि वृक्षेषु क्षिप्ता तेन महात्मना॥ २१॥
पूयशोणित विष्ठायां पतिता कृमिसङ्कुले। सर्वेषुनरकेष्वेवं क्षिप्ताहं नृपनन्दिनि
पीडायुक्तेषु तीव्रेषु तेनैवापि महात्मना। करपत्रैःपाटिताहं शक्तिभिस्ताडिता
अन्येष्वेव नरकेषु पातिता नृपनन्दिनि। योनिगर्तेषु क्षिप्तास्मि पतितादुःखस
धर्मराजेन तेनाहं नरकेषु निपातिता। वल्गुलीयोनिमासाद्य भुक्तं दुःखं सुदारु
गताहं क्रौष्टुकीं योनिं शुनीयोनिं पुनर्गता।
स कुक्कुटीं च मार्जारीमाखुयोनिं गताह्यहम्॥ २६॥
एवं योनि विशेषेषु पापयोनिषु तेन च। क्षिप्तास्मि धर्मराजेन पीडिता सर्व
तेनैवाहं कृताभूमौ शूकर नृपनन्दिनि। तवहस्ते महाभागे सन्ति तीर्थान्यने
तेनोदकेन सिक्तास्मि त्वयैव वरवर्णिनि।
मम पापं गतं देवि प्रसादात्तव सुन्दरि॥ २९॥
तवैव तेजःपुण्येन जातं ज्ञानं वरानने। इदानीं मामुद्धरस्व पतितां नरकस
यदानोद्धरसे देवि पुनर्यास्यामि दारुणम्। नरकं च महाभागेत्राहि मां दुःखम

गताहं पापभावेन दीनाहं च निराश्रया ॥ ३२ ॥

सुदेवोवाच ।

[...]कृतं हि मया भद्रे सुकृतं पुण्यसम्भवम् । येनाहमुद्धरे त्वां वै तन्मेत्वंवदसाम्प्रतम्

शूकर्युवाच ।

[...]राजा महाभाग इक्ष्वाकुर्मनुनन्दनः । विष्णुरेष महाप्राज्ञो भक्ती श्रीर्हि नान्यथा ॥

[...]व्रता महाभागा पतिव्रतपरायणा । त्वं सती सर्वदा भद्रे सर्वतीर्थमयी प्रिया ॥

देवि सर्वमयी नित्यं सर्वदेव मयी सदा ।

महापतिव्रतालोक एकात्वं नृपतेःप्रिया ॥ ३६ ॥

[...]शुश्रूषितो भर्ता भवत्याहि अहर्निशम् । एकस्य दिवसस्यापि पुण्यं देहि वरानने ॥

[...]शुश्रूषणस्यापि यदि मे कुरुषे प्रियम् । मम मातापितात्वं वै त्वं मे गुरुःसनातनः

[...]पापा दुराचारा असत्याज्ञानवर्जिता । मामुद्धर महाभागे भीताहं यमताडनैः ॥

सुकलोवाच ।

[...]श्रुत्वा तयाप्रोक्तं समालोक्य नृपं तदा । किं करोमि महाराज एष किं वदते पशुः

इक्ष्वाकुरुवाच ।

[...]दुःखां वराकीं वै पापयोनिं गतां शुभे । समुद्धरस्व पुण्यैस्त्वंमहच्छ्रेयोभविष्यति

[...]सुकावरा नारी सुदेवा चारुमङ्गला । उवाचैकाब्द पुण्यं ते मयादत्तं वरानने ॥४२॥

[...]सुकेन वाक्येन तयादेव्या हि तत्क्षणात् । रूपयौवनसम्पन्ना दिव्यमाला विभूषिता

[...]देहा च सम्भूता तेजोज्वालासमावृता । सर्वभूषणशोभाढ्या नानारत्नैश्चशोभिता

[...]ता दिव्यरूपा सा दिव्यगन्धानुलेपना । दिव्यं विमानमारूढा अन्तरिक्षं गतासती

[...]वाच ततो राज्ञीं प्रणता नतकन्धरा । स्वस्त्यस्तु ते महाभागे प्रसादात्तव सुन्दरि

[...]मि पातकान्मुक्ता स्वर्गं पुण्यतमं शुभम् । प्रणम्यैवं गता स्वर्गं सुदेवा श्रृणुसत्तम

एतत्ते सर्वमाख्यातं सुकलाया निवेदितम् ॥ ४८ ॥

[इति] श्रीपाद्मपुराणे द्वितीये भूमिखण्डेवेनोपाख्यानेसुकलाचरित्रेसुदेवास्वर्गारोहणंनाम



द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

मातलिरुवाच ।

...ोपार्जितं कायं पञ्चात्मकमिदं नृप । तत्तत्रैव परित्यज्य दिव्येनैव व्रजन्ति तम् ॥
...मानवाःसर्वे पापपुण्यप्रसाधकाः । तेऽपि कायं परित्यज्य अधऊर्ध्वं व्रजन्ति वै

ययातिरुवाच ।

...ात्मकेन कायेन सुकृतं दुष्कृतं नराः । उत्पाद्यैव प्रयान्त्येव अधऊर्ध्वं तु मातले ॥
...विशेषो हि धर्मज्ञ भूमौ कायं परित्यजेत् । पापपुण्यप्रभावाद्वै कायस्य पतनंभवेत्
...तो दृश्यते सूत प्रत्यक्षं मर्त्यमण्डले । विशेषंनैव पश्यामि पापपुण्यस्य चाधिकम्
...धर्मादिकं कर्म येनकायेन मानवः । समर्जयति वै मर्त्यस्तं कस्माद्विप्रसर्जयेत् ॥
...ाकायश्चद्वावेतौ मित्ररूपावुभावपि । कायंमित्रं परित्यज्य आत्मायातिसुनिश्चितः

मातलिरुवाच ।

सत्यमुक्तं त्वयाराजन्कायं त्यक्त्वा प्रयाति सः ॥
सम्बन्धोनास्ति तेनापि समंकायेन चात्मनः ॥ ६१ ॥

...ात्पञ्चत्वरूपोऽयंसन्धिजर्जरितःसदा । जरयापीड्यामानस्तुव्याधिभिर्दूषितःसदा
जरादोषैःप्रभग्नोऽसौ अत्रस्थातुं सनेच्छति ।
आकुल व्याकुलो भूत्वा जीवस्त्यक्त्वा प्रयाति सः ॥ ६३ ॥

...न धर्मपुण्यैश्च दानैर्नियमसंयमैः । अश्वमेधादिभिर्यज्ञैस्तीर्थैःसंयमनैस्तथा ॥६४॥
...यैःसुकृतैश्चान्यैर्जरानैव प्रधार्यते । पातकैश्च महाराज द्रवते कायमेव सा ॥ ६५ ॥

ययातिरुवाच ।

...ाज्जरा समुत्पन्ना कस्मात्कायं प्रपीडयेत् । मम विस्तरतस्त्वं च वक्तुमर्हसिसत्तम

मातलिरुवाच ।

...ते वर्णयिष्यामि जरायाःपरिकारणम् । यस्माच्चेयंसमुद्भूता कायमध्ये नृपोत्तम
...भूतात्मकःकायो विषयैःपञ्चभिःश्रितः । यदात्मा त्यजते राजन्सकायःपरिधक्ष्यते
...ना दीप्यमानस्तु सरसो ज्वलते नृप । तस्माद्विजायते धूपो धूमान्मेघाश्च जज्ञिरे
...ापःप्रवर्तन्ते अद्भ्यःपृथ्वी प्रकल्पते । जलमायाति साध्वी सा यथानारीरजस्वला

तस्मात्प्रजायते गन्धो गन्धाद्रसो नृपोत्तम। रसात्प्रभवतेचान्नमन्नाच्छुक्रं
शुक्राद्विजायते कायःकुरूपःकाय एव च। यथा पृथ्वी सृजेद्गन्धान्सैश्वरति
तथाकायश्चरैन्नित्यं रसाधारो हि सर्वसः।
गन्धश्च जायते तस्माद्गन्धाद्रसोभवेत्पुनः॥ ७३॥
तस्माज्जज्ञे महावह्निर्दृष्टान्तं पश्य भूपते। यथाकाष्ठाद्भवेद्वह्निःपुनःकाष्ठं प्र
कायमध्ये रसादग्निस्तद्वदेव प्रजायते। तत्र सञ्चरते नित्यं कायं पुष्णाति
यावद्रसस्यचाधिक्यं तावज्जीवःप्रशान्तिमान्। चरित्वा तादृशं वह्निःक्षुधा
अन्नमिच्छत्यसौतीव्रःपयसा च समन्वितम्। प्रदानं लभतेचान्नमुदकंचापि
शोणितं चरिते वह्निस्तद्वद्वीर्यं न संशयः। यक्ष्मरोगो भवेत्तस्मात्सर्वकाय
रसाधिक्यं भवेद्राजन्नथ वह्निःप्रशाम्यति। रसेन पीड्यमानस्तु ज्वररूपोऽभि
ग्रीवा पृष्ठं कटिं पायुं सर्वास्वेव तु सन्धिषु।
आरुध्य तिष्ठतेवह्निःकाये वह्निःप्रवर्तते॥ ८०॥
तस्याऽधिक्यं चरैन्नित्यं कायं पुष्णाति सर्वतः। रसस्तु बन्धमायाति बल
अतिरिक्तो बलेनैव वीर्यान्मर्माणि चालयेत्। तेनैव जायते कामःशल्यरूपो
सकामाग्निःसमाख्यातो बलनाशकरो नृप। मैथुनस्यप्रसङ्गेन विनाशत्वं
नारीं च संश्रयेत्प्राणी पीडितःकामवह्निना।
मैथुनस्यप्रसङ्गेन मूर्छितःकामकर्शितः॥ ८४॥
तेजोहीनो भवेत्कायो बलहानिश्च जायते। बलहीनो यदास्याद्वै दुर्बलो व
सवह्निःप्रचरेत्काये शोणितंशुक्रमेव च। शुक्रशोणितयोर्नाशाच्छून्यदेहोऽभि
अतीवजायते वायुःप्रचण्डोदारुणाकृतिः। विवर्णो दुःखसन्तप्त शून्यबुद्धिस्त
दृष्टा श्रुता तु या नारी तच्चित्तोभ्रमते सदा।
तृप्तिर्न जायते काये लोलुपे चित्तवर्त्मनि॥ ८८॥
विरूपश्च सुरूपश्च ध्यानान्मध्ये प्रजायते। बलहीनो यदाकामी मांसशोषि
पलितं जायते काये नाशिते कामवह्निना। तस्मात्सञ्चले कामी वृद्धोभ

ति चिन्ततेनारीं यथा वार्द्धुषिकोनरः । तथा तथा भवेद्धानिस्तेजसोऽस्यनरेश्वर
मात्प्रजायते कायो नाशरूपं समृच्छति । अग्निःप्रजायते भूयो जरारूपो न संशयः
णिनां क्षयरूपेण ज्वरोभवति दारुणः । स्थावराजङ्गमाःसर्वे ज्वरेणपरिपीडिताः ॥
मायान्ति ते सर्वे बहुपीडाप्रपीडिताः । एतत्तेसर्वमाख्यातमन्यत्किं ते वदाम्यहम् ॥
एवमुक्तो महाराजो मातलिं वाक्यमब्रवीत् ॥ ६५ ॥

इति श्रीपाद्मपुराणे द्वितीयेभूमिखण्डेवेनोपाख्याने मातापितृतीर्थकथने
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः

### शरीरदोषवर्णनम् ।

ययातिरुवाच ।

स्यरक्षकःकायो मातलेचात्मनासह । नाकमेषन प्रयाति तन्मेत्वं कारणंवद ॥१॥

मातलिरुवाच ।

नामपिभूतानां सङ्गतिर्नास्तिभूपते । आत्मनासहवर्तन्ते सङ्गत्यानैवपञ्च ते ॥ २ ॥
यां तत्रसङ्घातःकायग्रामे प्रवर्तते । जरयापीडिताःसर्वेःस्वं स्वं स्थानं प्रयान्ति ते ॥
यथा रसाधिकापृथ्वी महाराज प्रकल्पिता ।
रसैःक्लिन्ना ततःपृथ्वी मृदुत्वं याति भूपते ॥ ४ ॥
ते पिपीलिकाभिर्मूषिकाभिस्तथैव च । छिद्राण्येव प्रजायन्ते वल्मीकाश्चमहोदराः
काये प्रजायन्ते गण्डमाला विचर्चिकाः । कृमिभिर्भिद्यमानश्च कायएष नरोत्तम ॥
मास्तत्र प्रजायन्ते सद्यःपीडाकरास्तदा । एभिर्दोषैःसमायुक्तःकायोऽयं नहुषात्मज
प्राणसमा योगाद्दिवंयाति नरेश्वर । काये पार्थिवभागोऽयं समानार्थं प्रतिष्ठितः
न कायःस्वर्गमायाति यथापृथ्वी तथास्थितः ।

एतत्ते सर्वमाख्यातं दोषौघैःपार्थिवस्य यः ॥ ६ ॥

इति श्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्याने मातापितृमाहात्म्ये पञ्चषष्टितमोऽध्यायः ।

# षट्षष्टितमोऽध्यायः

## प्रथमतःशरीरोत्पत्तिपूर्वकशरीरवर्णनम् ।

ययातिरुवाच ।

पापात्पतति कायोऽयं धर्माच्चशृणु मातले । विशेषं न च पश्यामि पुण्यस्यापि
पुनःप्रजायते कायो यथाहि पतनं पुरा । कथमुत्पद्यते देहस्तन्मे विस्तरतो वद

मातलिरुवाच ।

अथ नाराकिणां पुंसामधर्मादेव केवलात् । क्षणमात्रेण भूतेभ्यःशरीरमुपजायते
तद्वद्धर्मेण चैकेन देवानामौपपादिकम् । सद्यःप्रजायते दिव्यं शरीरं भूतसारतः

कर्मणाव्यतिमिश्रेण यच्छरीरं महात्मनाम् ।
तद्रूप परिणामेन विज्ञेयं हि चतुर्विधम् ॥ ५ ॥

उद्भिज्जाःस्थावरां ज्ञेयास्तृणगुल्मादिरूपिणः । कृमीकीट पतङ्गाद्याःस्वेदजाः
अण्डजाःपक्षिणःसर्वे सर्पानक्राश्च भूपते । जरायुजाश्च विज्ञेया मानुषाश्च चतु

तत्र सिक्ताजलैर्भूमिरर्कस्योष्मविपाचिता ।
वायुना ग्म्यमाना च क्षेत्रतां तु प्रपद्यते ॥ ८ ॥

तत्रचोप्तानि बीजानि संसिक्तान्यम्भसा पुनः । उपगम्य मृदुत्वं च मूलभावं

तन्मूलादङ्कुरोत्पत्तिरङ्कुरात्पर्णसम्भवः ।
पर्णान्नालं ततःकाण्डं काण्डाच्च प्रभवःपुनः ॥ १० ॥

प्रभवाच्च भवेत्क्षीरं क्षीरात्तण्डुल सम्भवः । तण्डुलाच्च ततःपक्वाभवन्त्यो
यवाद्याःशालीपर्यन्ताःश्रेष्ठास्सप्तदश स्मृताः ।

ओषध्यःफलासोराढ्याशेषाःक्षुद्राःप्रकीर्तिताः ॥ १२ ॥

लूनामर्दिताश्च मुनिभिःपूर्वसंस्कृताः । शूर्पोलूखल पात्राद्यैःस्थालिकोदक वह्निभिः॥
विधा हि स्वभेदेन परिणामं व्रजन्ति ताः । अन्योन्य रससंयोगादनेकस्वादतांगताः
यं भोज्यं पेयलेह्यं चोष्यं खाद्यं च भूपते । तासां भेदाःषडङ्गाश्च मधुराद्याश्च षड्गुणः
नं पिण्डकवलैर्ग्रासैर्भुक्तं च देहिभिः । अन्तःस्थूलाशये सर्वप्राणान्स्थापयति क्रमात्

अपक्वं भुक्तमाहारं सवायुःकुरुते द्विधा ।
सम्प्रविश्यान्नमध्ये च पक्वं कृत्वा पृथग्गुणम् ॥ १७ ॥
अग्नेरूर्ध्वं जलं स्थाप्य तदन्नं च जलोपरि ।
जलस्याधःस्वयं प्राणःस्थित्वाग्निं धमने शनैः ॥ १८ ॥

वायुनाधम्यमानोऽग्निरत्युष्णं कुरुते जलम् । तदन्नमुष्णयोगेन समन्तात्पच्यते पुनः ॥
धा भवति तत्पक्वं पृथक्किट्टंपृथग्रसः । मलैर्द्वादशभिःकिट्टं भिन्नंदेहाद्बहिर्व्रजेत् ॥
र्णाक्षि नासिका जिह्वा दन्तोष्ठप्रजनं गुदम् । मलान्स्रवेदथस्वेदो विण्मूत्रं द्वादशस्मृतः
पद्मे प्रतिबद्धाश्च सर्वनाड्यःसमन्ततः । तासां मुखेषुतं सूक्ष्मं प्राणःस्थापयते रसम् ॥
न तेव ता नाडीःप्राणःपूरयते पुनः । सन्तर्पयन्ति तानाड्यःपूर्णादेहं समन्ततः ॥२३॥
सनाडीमध्यस्थःशारीरेणोष्मणा रसः । पच्यते पच्यमानश्च भवेत्पाकद्वयं पुनः ॥

त्वग्मांसास्थिमज्जा मेदोरुधिरं च प्रजायते ।
रक्ताल्लोमानि मांसं च केशाःस्नायुश्च मांसतः ॥ २५ ॥
स्नायोर्मज्जा तथास्थीनि निवसामज्जास्थि सम्भवा ।
मज्जाकारेण वैकल्यं शुक्रं च प्रसवात्मकम् ॥ २६ ॥

द्वादशचान्नस्य परिणामाःप्रकीर्तिताः । शुक्रं तस्यपरीणामःशुक्राद्देहस्य सम्भवः ॥
काले यदाशुक्रं निर्दोषं योनिसंस्थितम् । तदा तद्वायुसंसृष्टं स्त्रीरक्तेनैकतांव्रजेत् ॥
र्गकाले शुक्रस्य जीवःकारणसंयुतः । नित्यंप्रविशते योनिं कर्मभिस्वैर्नियन्त्रितः

शुक्रस्यसहरक्तस्य एकाहात्कललं भवेत् ।

पञ्चरात्रेण कलले बुद्बुदत्वं ततो भवेत् ॥ ३० ॥

मांसत्वं मासमात्रेण पञ्चधा जायतेपुनः । ग्रीवाशिरश्च स्कन्धश्च पृष्ठवंश
पाणीपादौ तथापार्श्वौं कटिर्गात्रं तथैव च । मासद्वयेन पर्वाणि क्रमशःस
त्रिभिर्मासैःप्रजायन्ते शतशोऽङ्कुर सन्धयः । मासैश्चतुर्भिर्जायन्तेअङ्गुल्यादि

मुखं नासा च कर्णौं च मासैर्जायन्ति पञ्चभिः ।
दन्तपङ्क्तिस्तथाजिह्वा जायते तु नखाः पुनः ॥ ३४ ॥

कर्णयोश्च भवेच्छिद्रं षण्मासाभ्यन्तरे पुनः । पायुर्मेढ्रमुपस्थं च शिश्नश्चाप्यु
सन्धयो ये च गात्रेषु मासैर्जायन्ति सप्तभिः । अङ्गप्रत्यङ्गसम्पूर्णं शिरःकेशस
विभक्ता वयवस्पष्टं पुनर्मासेऽष्टमे भवेत् । पञ्चात्मकसमायुक्तःपरिपक्वः

मातुराहार वीर्येण षड्विधेनरसेन च ।
नाभिसूत्रानिबद्धेन वर्द्धते स दिने दिने ॥ ३८ ॥

ततःस्मृतिं लभेज्जीवःसम्पूर्णेऽस्मिञ्छरीरके । सुखंदुःखं विजानातिनिद्रांस्वप्
मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः । नानायोनिसहस्राणि मयादृष्टा

अधुना जातमात्रोऽहं प्राप्तसंस्कार एव च ।
ततःश्रेयःकरिष्यामि येन गर्भे न सम्भवः ॥ ४१ ॥

गर्भस्थश्चिन्तयत्येवमहंगर्भाद्विनिःसृतः । अध्येष्यामि परंज्ञानं संसार वि
अवश्यं गर्भदुःखेन महता परिपीडितः । जीवःकर्मवशादास्ते मोक्षोपायं वि
यथागिरिवराक्रान्तःकश्चिद्दुःखेन तिष्ठति । तथाजरायुणा देही दुःखंतिष्ठति
पतितः सागरे यद्वद्दुःखमास्ते समाकुलः । गर्भोदकेनसिक्ताङ्गस्तथास्ते व्या
लोहकुम्भे यथान्यस्तःपच्यते कश्चिदग्निना । गर्भकुम्भे तथाक्षिप्तःपच्यते

सूचीभिरग्निवर्णाभिर्भिन्नगात्रो निरन्तरम् ।
यद्दुःखं जायते तस्य तद्गर्भेऽष्टगुणं भवेत् ॥ ४७ ॥

गर्भवासात्परंवासं कष्टंनैवास्ति कुत्रचित् । देहिनां दुःखमतुलं सुघोरम
इत्येतद्गर्भदुःखं हि प्राणिनां परिकीर्तितम् । चरस्थिराणां सर्वेषामात्मग



गर्भात्कोटिगुणा पीडा योनियन्त्रनिपीडनात् ।

संमूर्च्छि तस्य जायेत् जायमानस्य देहिनः ॥ ५० ॥
[त]त्पीड्यमानस्य पापमुद्गर पेषणात् । गर्भान्निष्क्रममाणस्य प्रबलैःसूतिवायुभिः ॥
[ल]भते सुमहद्दुःखं परित्राणं न विन्दति । यन्त्रेण पीड्यमानाःस्युर्निःसाराश्चयथेक्षवः
तथा शरीरं योनिस्थं पात्यते यन्त्र पीडनात् ।
अस्थिमद्वर्तुलाकारं स्नायुबन्धन वेष्टितम् ॥ ५३ ॥
[र]क्तमांस वसालिप्तं विण्मूत्रद्रव्य भाजनम् । केशलोम नखाच्छन्नं रोगायतनमुत्तमम्
[ए]क महाद्वारं गवाक्षाष्टक भूषितम् । ओष्ठद्वयकपाटं तु दन्तजिह्वागलान्वितम् ॥
नाडीस्वेद्र प्रवाहं च कफपित्तपरिप्लुतम् ।
जराशोकसमाविष्टं कालवक्त्रानलेस्थितम् ॥ ५६ ॥
[का]मक्रोधसमाक्रान्तं श्वसनैःश्चोपमर्दितम् । भोगतृष्णातुरं गूढं रागद्वेषवशानुगम् ॥
[सं]कुर्णिताङ्ग प्रत्यङ्गं जरायुपरिवेष्टितम् । सङ्कटेनाविविक्तेन योनिमार्गेणनिर्गतम् ॥
[विण्]मूत्ररक्तसिक्ताङ्गं षट्कौशिक समुद्भवम् । अस्थिपञ्जरसङ्घातं यज्ञमस्मिन्कलेवरे ॥
शतत्रयं षष्ट्यधिकं पञ्चपेशी शतानि च ।
सार्धाभिस्तिसृभिश्छन्नं समन्ताद्रोमकोटिभिः ॥ ६० ॥
शरीरं स्थूलसूक्ष्माभिर्दृश्यादृश्याभिरन्ततः ।
एताभिर्मांसनाडीभिःकोटिभिस्तत्समन्वितम् ॥ ६१ ॥
[स्वे]दमशुचिताभिरन्तरस्थं च ते नहि । द्वात्रिंशद्दशनाःप्रोक्ता विंशतिश्च नखाःस्मृतः
[पित्त]स्य कुडवंज्ञेयं कफस्यार्धाढकं तथा । वसायाश्चपलत्रिंशत्तदर्धं कललस्य वा ॥
[अ]र्वुदपलं ज्ञेयं पलानि दशमेदसः । पलत्रयं महारक्तं मज्जारक्ताश्चतुर्गुणा ॥ ६४ ॥
[शुक्र]ार्धं कुडवं ज्ञेयं तदर्धं देहिनां बलम् । मांसस्यचैकं पिण्डेन पलसाहस्रमुच्यते ॥
रक्तंपलशतं ज्ञेयं विण्मूत्रंचाप्रमाणतः ।
इति देह गृहे राजन्वासःस्यान्नित्यमात्मनः ॥ ६६ ॥
[श]ुद्धं च विशुद्धस्य कर्मबन्ध विनिर्मितम् । शुक्रशोणित संयोगाद्देहःसञ्जायते कचित्
[नि]त्यंविण्मूत्रसंयुक्तस्तेनायमशुचिःस्मृतः । यथा वै विष्ठयापूर्णःशुचिःसान्तर्बहिर्घटः ॥

शौचेन शोध्यमानोऽपि देहोऽयमशुचिर्भवेत् ।
यं प्राप्याति पवित्राणि पञ्चगव्य हवींषि च ॥ ६६ ॥
अशुचित्वं प्रयान्त्याशु देहोऽयमशुचिस्ततः । हृद्यान्यप्यन्नपानानि यं प्राप्यसुर...
अशुचित्वं प्रयान्त्याशु कोऽन्यःस्यादशुचिस्ततः ।
हे जनाःकिं न पश्यध्वं यन्निर्याति दिने दिने ॥ ७१ ॥
देहानुगो मलःपूतिस्तदाधारःकथं शुचिः । देहःसंशोध्यमानोऽपि पञ्चगव्य कु...
घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति । स्रोतांसि यस्य सततं प्रवहन्ति...
कफमूत्राद्यमशुचिःसदेहःशुध्यते कथम् । सर्वाशुचि निधानस्य शरीरस्य न ...
शुचिरेक प्रदेशोऽपि शुचिर्नस्याद्धृतेऽपि वा । दिवा वा यदिवारात्रौमृत्तोयैःशोध्य...
तथापिशुचिभाङ्नस्यान्नविरज्यन्ति ते नराः ।
कायोऽयमग्र्यधूपाद्यैर्यत्नेनापि सुसंस्कृतः ॥ ७६ ॥
न जहाति स्वभावं हि श्वपुच्छमिव नामितम् ।
तथाजात्यैव कृष्णोर्णा न शुक्लाजा तु जायते ॥ ७७ ॥
संशोध्यमानापि तथा भवेन्मूर्तिर्न निर्मला । जिघ्रन्नपिस्वदुर्गन्धं पश्यन्नपिमलं...
न विरज्यतिलोकोऽयंपीडयन्नपिनासिकाम् । अहोमोहस्यमाहात्म्यंयेनव्यामोहि...
जिघ्रन्पश्यन्स्वकान्दोषान्कायस्य न विरज्यते । स्वदेहस्यविगन्धेन विरज्येतन...
विरागकारणं तस्य किमन्यदुपदिश्यते । सर्वमेव जगत्पूतं देहमेवाशुचि...
यन्मलावयवस्पर्शाच्छुचिरप्य शुचिर्भवेत् । गन्धलेपापनोदाय शौचं देहस्य...
द्वयस्यापगमात्पश्चाद्भावशुध्या विशुध्यति ।
गङ्गातोयेन सर्वेण मृद्भारैर्गात्रलेपनैः ॥ ८३ ॥
मर्त्यो दुर्गन्धदेहोऽसौभावदुष्टोनशुध्यति । तीर्थस्नानैस्तपोभिश्च दुष्टात्मा न ...
स्वमूर्तिःक्षालितातीर्थे न शुद्धिमधिगच्छति । अन्तर्भाव प्रदुष्टस्य विशतोऽपि ...
न स्वर्गो नापवर्गश्च देहनिर्दहनंपरम् । भावशुद्धिःपरंशौचं प्रमाणं सर्वकर्मसु ...
अन्यथालिङ्ग्यते कान्ता भावेन दुहितान्यथा । मनसाभिद्यते वृत्तिरभिन्नेष्व...

...यथैव सतीपुत्रं चिन्तयेदन्यथापतिम्। यथा यथा स्वभावस्य महाभाग उदाहृतम् ॥
परिष्वक्तोऽपि यद्भार्यां भावहीनां न कारयेत्।
नाद्याद्विविधमन्नाद्यं रस्यानि सुरभीणि च ॥ ८६ ॥
...भावेन नरस्तस्माद्भावःसर्वत्र कारणम्। चित्तं शोधय यत्नेन किमन्यैर्बाह्यशोधनैः ॥
...वतःशुचि शुद्धात्मा स्वर्गं मोक्षं च विन्दति। ज्ञानमालम्भसा पुंसःसवैराग्यमृदापुनः
...विद्यारागविण्मूत्र लेपो नश्येद्विशोधनैः। एवमेतच्छरीरं हि निसर्गादशुचि विदुः ॥
विद्यादसार निःसारं कदलीसारसन्निभम्।
ज्ञात्वैवं द्रोषवद्देहं यःप्राज्ञःशिथिली भवेत् ॥ ९३ ॥
...ऽतिक्रामति संसारं दृढग्राहोऽव तिष्ठति। एवमेतन्महाकष्टं जन्मदुःखं प्रकीर्त्तितम् ॥
...मज्ञान्दोषेण नाना कर्मवशेन च। गर्भस्थस्यमतिर्यासीत्साजातस्य प्रणश्यति ॥
सुमूर्च्छितस्य दुःखेन योनियन्त्र निपीडनात्।
बाह्येन वायुनाचास्य मोहसङ्गेन देहिनाम् ॥ ९६ ॥
...मात्रस्य घोरेण ज्वरःसमुपजायते। तेन ज्वरेण महता महामोहःप्रजायते॥ ९७ ॥
...मूढस्य स्मृतिभ्रंशःशीघ्रं सञ्जायते पुनः। स्मृतिभ्रंशात्ततस्तस्य पूर्वकर्मवशेन च ॥
...सञ्जायते तस्य जन्तोस्तत्रैव जन्मनि। रक्तोमूढश्च लोकोऽयमकार्ये सम्प्रवर्त्तते ॥
...आत्मानं विजानाति न परं न च दैवतम्। न शृणोति परंश्रेयःस चक्षुरपि नेक्षते ॥
...मे पथि शनैर्गच्छन्स्खलतीव पदेपदे। सत्यां बुद्धौ न जानाति बोध्यमानोबुधैरपि॥
संसारे क्लिश्यते तेन नरो लोभवशानुगः।
गर्भस्मृतेरभावे च शास्त्रमुक्तं शिवेन च ॥ २ ॥
...दुःखकथनार्थाय स्वर्गमोक्ष प्रसाधकम्। येन तस्मिञ्छिवेज्ञाते धर्मकामार्थसाधने ॥
...कुर्वन्त्यात्मनःश्रेयस्तदत्र महदद्भुतम्। अव्यक्तेन्द्रियवृत्तित्वाद्बाल्येदुःखं महत्पुनः ॥
...च्छन्नपि न शक्नोति वक्तुं कर्तुं न सत्कृती। दन्तजन्ममहद्दुःखं लौल्येनवायुना तथा
...रोगैश्च विविधैःपीडा बालग्रहैरपि। तृड्बुभुक्षा परीताङ्गःक्वचित्तिष्ठति गच्छति ॥
विण्मूत्र भक्षणाद्यं च मोहाद्बालःसमाचरेत्।

कौमारःकर्णवेधेन मातापित्रोश्च ताडनैः ॥ १०७ ॥

अक्षराध्ययनाद्यैश्च दुःखंगुर्वादि शासनात् । प्रमत्तेन्द्रियवृत्तेश्च कामराग प्र

रोगार्दितस्य सततं कुतःसौख्यं हि यौवने । ईर्ष्ययास्तु महद्दुःखं मोहाद्दुःखं

तत्रस्यात्कुपितस्यैव रागोदुःखाय केवलम् । रात्रौ न विन्दते निन्द्रांकामाग्निपी

दिवावापि कुतःसौख्यमर्थोपार्जनचिन्तया ।

व्यवायाश्रितदेहस्य ये पुंसःशुक्रबिन्दवः ॥ १११ ॥

न ते सुखाय मन्तव्याःस्वेदजा इव बिन्दवः । कृमिभिःपीड्यमानस्यकुष्ठिनःपाम

कण्डूयनाग्नितापेन यत्सुखं स्त्रीषु तद्विदुः । यादृशं मन्यते सौख्यमर्थोपार्जना

तादृशं स्त्रीषु मन्तव्यमधिकंनैव विद्यते । मर्त्यस्यवेदनासैव यां विना चित्त

ततोऽन्योन्यं पुराप्राप्तमन्ते सैवान्यथा भवेत् ।

तदेवं जरयाग्रस्तमामयाव्यंपि न प्रियम् ॥ ११५ ॥

अपूर्ववत्स्वमात्मानं जरयापरिपीडितम् । यःपश्यन्नविरज्येत कोऽन्यस्तस्मा

जराभिभूतोऽपिजन्तुःपत्नीपुत्रादि बान्धवैः । अशक्तत्वाद्दुराचारैर्भृत्यैश्च परि

न धर्ममर्थं कामं च मोक्षं च जरयायुतः । शक्तःसाधयितुं तस्माद्युवाधर्मं स

वातपित्त कफादीनां वैषम्यं व्याधिरुच्यते ।

वातादीनां समूहेन देहोऽयं परिकीर्तितः ॥ ११८ ॥

तस्माद्व्याधिमयं ज्ञेयं शरीरमिदमात्मनः । वाताद्यव्यतिरिक्तत्वाद्व्याधीनां प

रोगैर्नानाविधैर्याति देहिदुःखान्यनेकधा ।

तानि च स्वात्मवेद्यानि किमन्यत्कथयाम्यहम् ॥ १२१ ॥

एकोत्तरं मृत्युशतमस्मिन्देहेप्रतिष्ठितम् । तत्रैकः कालसंयुक्तः शेषाश्चागन्तवः

येत्विहागन्तवःप्रोक्तास्ते प्रशाम्यन्ति भेषजैः । जपहोमप्रदानैश्च कालमृत्युर्न श

यदिवाऽपमृत्युर्नस्याद्विगास्वादादपङ्क्तितः । न चास्ति पुरुषस्तस्मादपमृत्योर्वि

विविधा व्याधयस्तत्र सर्पाद्याःप्राणिनस्तथा ।

विषाणि चाभिचाराश्च मृत्योर्द्वाराणि देहिनाम् ॥ १२५ ॥

पीडितं सर्वरोगाद्यैरपि धन्वन्तरिःस्वयम् ।
स्वस्थीकर्तुं न शक्नोति कालप्राप्तं न चान्यथा ॥ १२६ ॥
[...]र्थं न तपोदानं नमाता न च बान्धवाः । शक्नुवन्तिपरित्रातुं नरं कालेनपीडितम् ॥
रसायन तपो जाप्य योगसिद्धैर्महात्मभिः ।
अवान्तरित शान्तिःस्यात्कालमृत्युमवाप्नुयात् ॥ १२८ ॥
[...]ते योनिकीटेषु मृतःकर्मवशात्पुनः । देहभेदेन यःपश्येद्वियोगं कर्म संक्षयात् ॥२६॥
[...]णां तद्विनिर्दिष्टं न नाशःपरमार्थतः । महातमःप्रविष्टस्य छिद्यमानेषु मर्मसु ॥ १३० ॥
[...]ःखं मरणेजन्तोर्न तस्येहोपमा क्वचित् । हा तात मातःकान्तेति क्रन्दत्येवंसुदुःखितः
[...]क इव सर्पेण ग्रस्यते मृत्युना जगत् । बान्धवैःसपरित्यक्तःप्रियैश्च परिवारितः ॥
[...]वसन्दीर्घमुष्णं च मुखेन परिशुष्यता । खट्वायां परिवृत्तो हि मुह्यते च मुहुर्मुहुः॥
संमूढःक्षिपतेऽत्यर्थं हस्तपादावितस्ततः ।
खट्वातो वाञ्छते भूमिं भूमेःखट्वां पुनर्महीम् ॥ १३४ ॥
[...]स्त्यक्तलज्जश्च मूत्रविष्ठानुलेपितः । याचमानश्च सलिलंशुष्ककण्ठोष्ठतालुकः ॥
[...]मानःस्ववित्तानि कस्यैतानि मृतेमयि । यमदूतैर्नीयमानःकालपाशेनकर्षितः ॥
[...]ति पश्यतामेवं गलेघुरघुरायते । जीवस्तृणजलौकेव देहाद्देहं विशेषत्क्रमात् ॥३७॥
[...]त्युत्तरमङ्गं च देहं त्यजति पूर्वकम् । मरणात्प्रार्थनाद्दुःखमधिकं हिविवेकिनाम्
[...]कं मरणे दुःखमनन्तं प्रार्थनाकृतम् । जगतांपतिरर्थित्वाद्विष्णुर्वामनतां गतः॥३६॥
अधिकःकोऽपरस्तस्माद्यो न यास्यति लाघवम् ।
ज्ञातं मयेदमधुना मृत्योर्भवति यद्गुरुः ॥ १४० ॥
न परं प्रार्थयेद्भूयस्तृष्णा लाघवकारणम् ।
आदौ दुःखं तथामध्ये दुःखमन्ते च दारुणम् ॥ १४१ ॥
[...]र्गात्सर्वभूतानामिति दुःखपरम्परा । वर्तमानान्यतीतानि दुःखान्येतानि यानि तु ॥
[...]ःशोचयेज्जन्म न विरज्यति तेन वै । आत्याहारान्महद्दुःखमल्पाहारात्तदन्तरम् ॥
[...]त्रुटते भोजने कण्ठो भोजने च कुतःसुखम् ।

क्षुधा हि सर्वरोगाणां व्याधिःश्रेष्ठतमःस्मृतः ॥ १४४ ॥

सकाम्यौषधलेपेन क्षणमात्रं प्रशाम्यति । क्षुद्व्याधि वेदना तीव्राः निःशेष
तयाभिभूतोम्रियते यथान्यैर्व्याधिभिर्नरः । तद्रसेऽपिहि किं सौख्यं जिह्वाग्रे
तत्क्षणादर्धकालेन कण्ठं प्राप्य निवर्तते । इति क्षुद्व्याधि तप्तानामन्नमौषध

न तत्सुखाय मन्तव्यं परमार्थेन पण्डितैः ।

मृतोपमश्च यःशेते सर्वकार्यविवर्जितः ॥ १४८ ॥

तत्रापि च कुतःसौख्यं तमसा चोदितात्मनः । प्रबोधेऽपि कुतःसौख्यंकार्य
कृषिवाणिज्यसेवाद्य गोरक्षादि परिश्रमैः । प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षु

तृप्ताःकाम्येन बाध्यन्ते निद्रया निशि जन्तवः ।

अर्थस्योपार्जनेदुःखं दुःखमर्जितरक्षणे ॥ १५१ ॥

नाशेदुःखं व्ययेदुःखमर्थस्यैवकुतःसुखम् । चौरेभ्यःसलिलेभ्योऽग्नेःस्वजनात्
भयमर्थवतांनित्यं मृत्योर्देहभृतामिव । खे यथा पक्षिभिर्मांसं भक्ष्यते

जले च भक्ष्यते मत्स्यैस्तथा सर्वत्र वित्तवान् ।

विमोहयन्ति सम्पत्सु वारयन्ति विपत्सु च ॥ १५४ ॥

खेदयन्त्यर्जनेकाले कदार्थाःस्युःसुखावहाः । प्रागर्थपतिरुद्विग्नःपश्चात्सर्वार्थ

तयोरर्थपतिर्दुःखी सुखीमन्ये विरक्त धीः ।

हेमन्ते शैशिरं दुःखं ग्रीष्मे तापस्य दारुणम् ॥ १५६ ॥

प्रावृष्यत्यल्पवृष्टिभ्यां कालेऽप्येवं कुतःसुखम् । विवाहविस्तरैर्दुःखं तद्गर्भो
सूतिवैषम्यदुःखैश्च दुःखं विष्ठादि कर्मभिः । दन्ताक्षिरोगेपुत्रस्य हा कष्टं किं

गावो नष्टाःकृषिर्भग्ना भार्या च प्रपलायिता ।

अमीप्राघूर्णिकाःप्राप्ता भयं मे शंसिनो गृहान् ॥ १५९ ॥

बालापत्या च मे भार्याकःकरिष्यतिरन्धनम् । विवाहकालेकन्यायाःकीदृ

एतच्चिन्ताभिभूतानां कुतःसौख्यं कुटुम्बिनाम् ॥ १६१ ॥



कुटुम्बचिन्ताकुलितस्य पुंसःश्रुतं च शीलं च गुणाश्च सर्वे ।

अपक्वकुम्भे निहिता इवापःप्रयान्ति देहेनसमं विनाशनम् ॥ १६२ ॥
राज्येऽपि हि कुतःसौख्यं सन्धिविग्रहचिन्तया ।
पुत्रादपि भयं यत्र तत्रसौख्यं हि कीदृशम् ॥ १६३ ॥
...जातीयाद्भयं प्रायःसर्वेषामेव देहिनाम् । एकद्रव्याभिलाषित्वाच्छुनामिव परस्परम्
...विश्य वनं कश्चिन्नृपःख्यातोऽस्तिभूतले । निखिलंयस्तिरस्कृत्यसुखंतिष्ठतिनिर्भयः
...बाहुसहस्रं हि पातयामास भूतले । श्रीमतःकार्तवीर्यस्य ऋषिपुत्रःप्रतापवान् ॥
...पुत्रस्य रामस्य रामो दशरथात्मजः । जघान वीर्यमतुलमूर्ध्वगं सुमहात्मनः ॥
जरासन्धेन रामस्य तेजसानाशितं यशः ।
जरासन्धस्य भीमेन तस्यापि पवनात्मजः ॥ १६८ ॥
...नपि सूर्येण विक्षिप्तःपतितःक्षितौ । निवातकवचान्सर्वं दानवान्बलदर्पिताम् ॥
...नर्जुनःश्रीमान्गोपालैःस विनिर्जितः । सूर्यःप्रतापयुक्तोऽपि मेघैःसंछाद्यते क्वचित्
क्षिप्यते वायुनामेघो वायोर्वीर्यं नगैर्जितम् ।
दह्यन्ते वह्निना शैलाःसवह्निःशाम्यते जलैः ॥ १७१ ॥
...लं शोष्यते सूर्यैस्तेसूर्याःसहवारिणा । त्रैलोक्येन समस्ताश्च नश्यन्ति ब्रह्मणोदिने
...पि त्रिदशैःसार्धमुपसंह्रियते पुनः । परार्धद्वय कालान्ते शिवेन परमात्मना ॥७३॥
...वास्ति संसारे यच्च सर्वोत्तमंबलम् । विहायैकं जगन्नाथं परमात्मानमव्ययम् ॥
...सातिशयं सर्वं मतिमानं विवर्जयेत् । एवंभूतेजगत्यस्मिन्कःसुरःपण्डितोऽपिवा
नह्यस्ति सर्ववित्कश्चिन्न वा मूर्खोऽपि सर्वतः ।
यावद्यस्तु विजानाति तावत्तत्र सपण्डितः ॥ १७६ ॥
...याने तु सर्वत्र प्रभावःसदृशःस्मृतः । वित्तस्यातिशयत्वेन प्रभावःकस्यचित्क्वचित्
...र्निर्जितादेवास्तेदेवैर्निजिताःपुनः । इत्यन्योन्यंश्रितो लोको भाग्यैर्जयपराजयैः ।
एवं वस्त्रयुगं राज्ञां प्रस्थमात्राम्बु भोजनम् ।
यानं शय्यासनंचैव शेषं दुःखाय केवलम् ॥ १७९ ॥
...चापि भवने खट्वामात्र परिग्रहः । उदकुम्भ सहस्रेभ्यःक्लेशायास प्रविस्तरः ॥

प्रत्यूषे तूर्यनिर्घोषःसमं पुरनिवासिभिः। राज्येऽभिमानमात्रं हि ममेदं वाद्यते
सर्वमाभरणं भारःसर्वमालेपनं मलम्। सर्वं प्रलपितं गीतं नृत्यमुन्मत्त चेष्टितम्
इत्येवं राज्यसम्भोगैःकुतःसौख्यं विचारतः।
नृपाणां विग्रहेचिन्ता वान्योन्य विजिगीषया॥ १८३॥
प्रायेण श्रीमदालेपान्नहुषाद्या महानृपाः। स्वर्गं प्राप्तानि पतिताःकःश्रिया विन्दते
स्वर्गेऽपि च कुतःसौख्यं दृष्ट्वा दीप्तां परश्रियम्।
उपर्युपरि देवानामन्योन्यातिशयस्थिताम्॥ १८५॥
नरैःपुण्यफलं स्वर्गे मूलच्छेदेन भुज्यते। न चान्यत्क्रियते कर्म सोऽत्र दोषः
छिन्नमूल तरुर्यद्वद्दिवसैःपतति क्षितौ। पुण्यस्य संक्षयात्तद्वन्निपतन्ति दिवं
सुखाभिलाषनिष्ठानां सुखभोगादि सम्प्लवैः।
अकस्मात्पतितं दुःखं कष्टं स्वर्गे दिवौकसाम्॥ १८८॥
इतिस्वर्गेऽपिदेवानांनास्तिसौख्यंविचारतः। क्षयश्चविषयासिद्धौस्वर्गेभोगा
तत्रदुःखं महत्कष्टं नरकाग्निषु देहिनाम्। घोरैश्च विविधैर्भावैर्वाङ्मनः काय
कुठारच्छेदनं तीव्रं वल्कलानां च तक्षणम्। पर्णशाखा फलानां च पातश्च
उन्मूलनान्नदीभिश्च गजैरन्यैश्च देहिभिः। दावाग्नि हिमशोषैश्च दुःखं स्थावर
तद्वद्भुजङ्ग सर्पाणां क्रोधैः दुःखं च दारुणम्।
दुष्टानां घातनं लोके पाशेन च निबन्धनम्॥ १९३॥
अकस्माज्जन्ममरणं कीटानां च मुहुर्मुहुः। सरीसृप निकायानामेवं दुःखानि
पशूनामात्मशमनं दण्ड ताडनमेव च। नासावेधेन सन्त्रासःप्रतोदेन सुताडनम्
वेत्रकाष्ठादि निगडैरङ्कुशेनाङ्गबन्धनम्। भावेन मनसाक्लेशैर्भिक्षायुवादि
आत्मयूथ वियोगैश्च बलान्नयन बन्धने। पशूनां सन्ति कायानामेवं दुःखानि
वर्षा शीतातपाद्दुखं सुकष्टं ग्रहपक्षिणाम्। क्लेशमानाति कायानामेवं दुःखानि
गर्भवासे महद्दुखं जन्मदुःखं तथा नृणाम्।
सुबाल्यदुःखं चाज्ञानं कौमारे गुरुशासनम्॥ १९९॥

ने कामरागाभ्यां दुःखंचैवेर्ष्यया पुनः । कृषिवाणिज्य सेवाद्यैर्गोरक्षादिक कर्मभिः
वृद्धभावे च जरया व्याधिभिश्च प्रपीडनात् ।
मरणे च महद्दुखं प्रार्थनायां ततोऽधिकम् ॥ २०१ ॥
ाग्नि जल्दाघात चौरशत्रुभयं महत् । अर्थस्यार्जन रक्षायां भयं नाशे व्यये पुनः ॥
र्ण्यंमत्सरोदम्भो धनाधिक्ये भयंमहत् । अकार्येसम्प्रवृत्तिश्च दुःखानि धनिनांसदा
वृत्तिःकुसीदं च दासत्वं परतन्त्रता । इष्टानिष्टाभियोगश्च संयोगाश्च सहस्रशः ॥
क्षं दुर्भगत्वं च मूर्खत्वं च दरिद्रता । अधरोत्तरभागश्च नारकं राजविक्रमम् ॥ ५ ॥
अन्योन्याभिभवं दुःखमन्योन्यतोभयं महत् ।
अन्योन्याच्च प्रकोपश्च राज्ञोदुःखं महीभृताम् ॥ २०६ ॥
त्यताभावानां कृतकाम्यस्य देहिनः । अन्योन्य मर्मभेदाच्च अन्योन्यकरपीडनात्
लुब्धाश्च पापभेदेन अन्योन्यस्य च भक्षणम् ।
इत्येवमादिभिर्दुःखैर्यस्माद्भीतं चराचरम् ॥ २०८ ॥
यादिमनुष्यान्तंतस्मात्सर्वंत्यजेद्बुधः । स्कन्धात्स्कन्धेनयन्भारं विश्राममंमन्यतेयथा
सर्वमिदंलोके दुःखं दुःखेन शाम्यति । अन्योन्यातिशयोपेताःसर्वदा भोगसम्प्लवाः
धर्मक्षयाच्च देवानां दिवि दुःखमवस्थितम् ।
नानायोनि सहस्रेषु सम्भवःपुण्य संक्षयात् ॥ २११ ॥
रोगाश्च विविधाकारा देवलोकेऽपि संस्मृताः ।
यज्ञस्य हि शिरश्छिन्नमश्विभ्यां संहितं पुनः ॥ २१२ ॥
दोषेण यज्ञस्य शिरोरोगःसदैव हि । मार्तण्ड भानोःकुष्ठं च वरुणस्य जलोदरम् ॥
शनवैकल्यं भुजस्तम्भःशचीपतेः । सुमहान्क्षयरोगश्च सोमस्य परिकीर्तितः ॥
सुमहानासीद्दक्षस्यापि प्रजापतेः । कल्पेकल्पे च देवानां महतामपि संक्षयः ॥
र्क्षय कालान्ते ब्रह्मणश्चाप्य नित्यता । दक्षस्य दुहितां पौत्रीं ब्रह्मो कामितवान्पुनः
क्रोधेन च जयां देवीं येनाज्ञां शमनात्प्रभुः ।
कामक्रोधौ स्थितौ यत्र तत्र दोषास्तदात्मकाः ॥ २१७ ॥

दुःखानि च समस्तानिसंस्थितानि न संशय । विशीर्णजन्ममरणं सर्वाशिता

स्त्रीवधःकामसक्तिश्च सारथ्यं पाण्डवे बले ।

रुद्रेण त्रिपुरं दग्धं दक्षयज्ञो विनाशितः ॥ २१६ ॥

स्कन्दस्य जन्मवैशुक्रात्क्रीडादीनां सहस्रशः । एवं त्रयोऽपि रागाद्यैर्दोषैर्देवा

एभ्यःपरःप्रभुःशान्तःपरिपूर्णःसमुक्तिदः । एवमेतज्जगत्सर्वमन्योन्यातिशयेषि

दुःखैराकुलितं ज्ञात्वा निर्वेदं परमं व्रजेत् । निर्वेदाच्चविरागःस्याद्विरागाज्ज्ञा

ज्ञानेनतत्परंज्ञानं शिवंमुक्तिमवाप्नुयात् । समस्तदुःख निर्मुक्तःस्वस्थात्मा स

सर्वज्ञःपरिपूर्णश्च मुक्त इत्यभिधीयते ॥ २२३ ॥

मातलिरुवाच ।

एतत्ते सर्वमाख्यातं यत्त्वया परिपृच्छितम् । धर्माधर्म विवेको हि सर्वज्ञान

इन्द्रलोके प्रगन्तव्यं देवराजस्य शासनात् ॥ २२५ ॥

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने पितृमातृतीर्थमाह

षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

# सप्तषष्टितमोऽध्यायः

## मनुष्यकृतानां सुकृतदुष्कृतकर्मणांविपाकः ।

ययातिरुवाच ।

अस्मद्भाग्यप्रसङ्गेन भवतो दर्शनं मम । सञ्जातं शक्रसंवाह एतच्छ्रेयो ममातुल

मानवा मर्त्यलोके च पापं कुर्वन्ति दारुणम् । तेषां कर्मविपाकं च मातले व

मातलिरुवाच ।

श्रूयतामभिधास्यामि पापाचारस्य लक्षणम् । श्रुतेसति महज्ज्ञानमत्रलोके

वेदनिन्दां प्रकुर्वन्ति ब्रह्माचारस्य कुत्सनम् । महापातकमेवापि ज्ञातव्यं ज्ञा

साधूनामपि सर्वेषां यःपीडां हि समाचरेत् ।
महापातकमेवापि प्रायश्चित्तेन हि व्रजेत् ॥ ५ ॥
चारं परित्यज्य अन्याचारं व्रजन्ति च । एतच्चपातकं घोरं कथितं कृत्यवेदिभिः
पित्रोश्च या निन्दा ताडनं भगिनीषु च । पितृष्वसुर्निन्दनं च तदेवपातकं ध्रुवम्
सम्प्राप्ते श्राद्धकालेऽपि पञ्चक्रोशान्तरैस्थितम् ।
जामातरं परित्यज्य तथा च दुहितुःसुतम् ॥ ८ ॥
रंचैव स्वस्त्रीयं परित्यज्य प्रवर्तते । कामात्क्रोधाद्भयाद्वापि अन्यं भोजयते यदा
तेनैव भुञ्जन्ति देवाश्चैव न भुञ्जते । एतच्च पातकं तस्य पितृघात समंकृतम् ॥१०॥
कालेऽपि सम्प्राते आगते ब्राह्मणे किल । भूरिदानंपरित्यज्य कतिभ्यो हि प्रदीयते
स्मै दीयते दानमन्येभ्योऽपि न दीयते । एतच्च पातकं घोरं दानभ्रंशकरं स्मृतम्
यजमानगृहे सेवा संस्थितान्ब्राह्मणान्निजान् ।
परित्यज्य हि यद्दानं न दानस्य च लक्षणम् ॥ १३ ॥
श्रितं हि यं विप्रं धर्माचार समन्वितम् । सर्वोपायैःसुपुष्येत्तं सुदानैर्बहुभिर्नृप ॥
मभ्यर्च्य विद्वांसं प्राप्तविप्रं सदार्हयेत् । तं हि त्यक्त्वा ददेद्दानमन्यस्मै ब्राह्मणायवै
हुतं भवेत्तस्य निष्फलं नात्र संशयः । ब्राह्मणःक्षत्रियो वैश्यःशूद्रश्चापि चतुर्थकः
कालेषु सर्वेषु संश्रितं पूजयेद्द्विजम् । मूर्खंवापि हि विद्वांसं तस्य पुण्यफलं श्रृणु
अश्वमेधस्य यज्ञस्य फलंतस्य प्रजायते ।
कस्माद्धिकारणाद्राजञ्छ्वक्यं प्राप्य न कारयेत् ॥ १८ ॥
विप्रःसमायातस्तत्कालं श्राद्धकर्मणि । उभौ तौ पूजयेत्तत्र भोजनाच्छादनैस्ततः
लदक्षिणाभिश्च पितरस्तस्य हर्षिताः । श्राद्धभुक्ताय दातव्यं सदादानं च दक्षिणा
न ददेच्छ्राद्धकर्ता यो गोहत्यादि समं भवेत् ।
द्वावेतौ पूजयेत्तस्माच्छ्रद्धया नृपसत्तम ॥ २१ ॥
नत्व प्रभावाद्वै तमेकं हि प्रपूजयेत् । व्यतीपातेपिऽसम्प्राप्ते वैधृतौ च नृपोत्तम ॥
वास्यां तथा राजन्क्षयाहेऽपरपक्षके । श्राद्धमेवं प्रकर्तव्यं ब्राह्मणादि त्रिवर्णकैः ॥

यज्ञे तथा महाराज ऋत्विजश्च प्रकारयेत् । तथा विप्राःप्रकर्तव्याःश्राद्धदानाय
अविज्ञातःप्रकर्तव्यो ब्राह्मणोनैव जानता । यस्यापि ज्ञायतेवंशःकुलं त्रिपुरुषं

आचाराश्च तथा राजन् स्तं विप्रं सन्निमन्त्रयेत् ।
कुलं न ज्ञायते यस्य आचारेणविचारयेत् ॥ २६ ॥

श्राद्धदाने प्रकर्त्तव्ये विशुद्धो मूर्खएव हि । अविज्ञातो भवेद्विप्रो वेदवेदाङ्ग
श्राद्धदानं प्रकर्त्तव्यं तस्माद्विप्रं निमन्त्रयेत् । आतिथ्यं तु प्रकर्तव्यमपूर्वं

अन्यथा कुरुते पापी स याति नरकं ध्रुवम् ।
तस्माद्विप्रःप्रकर्तव्यो दानेश्राद्धे च पर्वसु ॥ २६ ॥

आदौ परीक्षयेद्विप्रं श्राद्धेदाने प्रकारयेत् । नाश्नन्ति तस्य वै गेहे पितरोवि
शापंदत्त्वा ततोयान्ति श्राद्धाद्विप्रं विवर्जितात् । महापापीभवेत्सोऽपिब्रह्महासम
पैत्राचारं परित्यज्य यो वर्तेत नरोत्तम । महापापी स विज्ञेयःसर्वधर्म

ये त्यजन्ति शिवाचारं वैष्णवं भोगदायकम् ।
निन्दन्ति ब्राह्मणं धर्मं विज्ञेयाःपापवर्द्धनाः ॥ ३३ ॥

ये त्यजन्ति शिवाचारं शिवभक्तान्द्विषन्ति च । हरिं निन्दन्ति ये पापा ब्रह्मद्वेष
आचारनिन्दकाये ते महापातक कृत्तमाः । आद्यंपूज्यं परंज्ञानं पुण्यंभागव

वैष्णवं हरिवंशं वा मत्स्यं वा कूर्ममेव च ।
पाद्मं वा ये पूजयन्ति तेषांश्रेयो वदाम्यहम् ॥ ३६ ॥

प्रत्यक्षं तेन वैदेवःपूजितो मधुसूदनः । तस्मात्प्रपूजयेज्ज्ञानं वैष्णवं विष्णु
देवस्थाने च नित्यं वै वैष्णवं पुस्तकं नृप । तस्मिन्प्रपूजितेविप्र पूजित

असम्पूज्य हरेर्ज्ञानं येऽधीयते लिखन्ति च ।
अज्ञाय तत्प्रयच्छन्ति शृणुवन्त्युच्चारयन्ति च ॥ ३६ ॥

विक्रीडन्ति च लोभेन कुज्ञान नियमेन च । असंस्कृत प्रदेशेषु यथेष्टं स्थाप
हरिज्ञानं यथाक्षेमं प्रत्यक्षाच्च प्रकाशयेत् । अधीते च समर्थश्च यःप्रमादं क
अशुचिश्चाशुचौस्थाने यःप्रवक्ति शृणोति च । इतिसर्व समासेनज्ञाननिन्दा

गुरुपूजामकृत्वैव यःशास्त्रं श्रोतुमिच्छति ।
न करोति च शुश्रूषामाज्ञाभङ्गं च भावतः ॥ ४३ ॥

नन्दति तद्वाक्यमुत्तरं सम्प्रयच्छति । गुरुकर्मणि साध्ये च तदुपेक्षां करोति च
र्तमशक्तं च विदेशं प्रस्थितं तथा । अरिभिःपरिभूतं वा यःसन्त्यजति पापकृत् ॥
तं पुराणं तु तस्यपापं वदाम्यहम् । कुम्भीपाके वसेत्तावद्यावदिन्द्राश्चतुर्दश ॥

पठमानं गुरुं यो हि उपेक्षयति पापधीः ।
तस्यापिपातकं घोरं चिरंनरकदायकम् ॥ ४७ ॥

पुत्रेषु मित्रेषु यश्चावज्ञांकरोति च । इत्येतत्पातकं ज्ञेयं गुरुनिन्दासमं महत् ॥
स्वर्णस्तेयी च सुरापीगुरुतल्पगः । महापातकिनश्चैते तत्संयोगी च पञ्चमः ॥
द्वेषाद्भयाल्लोभाद्ब्राह्मणस्य विशेषतः । मर्मातिकृन्तकोयश्च ब्रह्मघ्नःसप्रकीर्तितः॥

ब्राह्मणं यःसमाहूय याचमानमकिञ्चनम् ।
पश्चान्नास्तीति योब्रूयात्स च वै ब्रह्महा नृप ॥ ५१ ॥

विद्याभिमानेन निस्तेजयति वै द्विजम् । उदासीनं सभामन्ये ब्रह्महा सप्रकीर्तित
गुणैरथात्मानं नयत्युत्कर्षतां पुनः । गुरुं विरोधयेद्यस्तु स च वै ब्रह्महास्मृतः ॥

क्षुत्तृषातप्तदेहानामन्नभोजनमिच्छताम् ।
यः समाचरते विघ्नं तमाहुर्ब्रह्मघातकम् ॥ ५४ ॥

नःसर्वलोकानां रन्ध्रान्वेषणतत्परः । उद्वेजनकरःक्रूरः स च वै ब्रह्महास्मृतः ॥
द्विजगवांभूमिं पूर्वदत्तां हरेत्तु यः । प्रनष्टामपि कालेन तमांहुर्ब्रह्मघातकम् ॥ ५६ ॥
वित्तापहरणं न्यासेन समुपार्जितम् । ब्रह्महत्यासमंज्ञेयं तस्यपातकमुत्तमम् ॥

अग्निहोत्रं परित्यज्य पञ्चयज्ञादिकर्म च ।
मातापित्रोर्गुरूणां च कूटसाक्ष्यं च यश्चरेत् ॥ ५८ ॥

शिवभक्तानामभक्ष्याणां च भक्षणम् । वनेनिरपराधानां प्राणिनां च प्रमारणम्

गवां गोष्ठे वने चाग्नेःपुरेग्रामे च दीपनम् ।
इति पापानि घोराणि सुरापान समानि तु ॥ ६१ ॥

दीनसर्वस्वहरणं परस्त्री गजवाजिनाम् । गो भूरजत वस्त्राणामौषधीनां
चन्दना गुरुकर्पूर कस्तूरीपट्टवाससाम् । परन्यासापहरणं रुक्मस्तेयसमं
कन्याया वरयोग्याया अदानं सदृशेवरे । पुत्रमित्रकलत्रेषु गमनं भगिनीषु च ।
कुमारी साहसं घोरमन्त्यजस्त्री निषेवणम् । सवर्णायाश्च गमनं गुरुतल्पसमं

महापातक तुल्यानि पापान्युक्तानि यानि तु ।
तानि पातकसंज्ञानि तन्न्यूनमुपपातकम् ॥ ६५ ॥

द्विजायार्थं प्रतिज्ञाय न प्रयच्छति यः पुनः । तत्र विस्मरते विप्रस्तुल्यं तदुपपातं
द्विजद्रव्यापहरणं मर्यादाया व्यतिक्रमम् । अतिमानातिकोपश्च दाम्भिकत्वं

अन्यत्र विषयासक्तिः कार्पण्यं शाठ्य मत्सरम् ।
परदाराभिगमनं साध्वी कन्याभिदूषणम् ॥ ६८ ॥

परिवित्तिःपरिवेत्ता ययाच परिविद्यते । तयोर्दानं च कन्यायास्तयोरेव च

पुत्रमित्र कलत्राणामभावे स्वामिनस्तथा ।
भार्याणां च परित्यागःसाधूनां च तपस्विनाम् ॥ ७० ॥
गवां क्षत्रिय वैश्यानां स्त्रीशूद्राणां च घातनम् ।
शिवायतन वृक्षाणां पुष्पाराम विनाशनम् ॥ ७१ ॥

यःपीडामाश्रमस्थानामाचरेदल्पिकामपि । तद्भृत्यपरिवर्गस्य पशुधान्य
वस्त्र धान्य पशुस्तेयमयाज्यानां च याजनम् । यज्ञारामतडागानां दारापत्यस्य

तीर्थयात्रोपवासानां व्रतानां च सुकर्मणाम् ।
स्त्रीधनान्युपजीवन्ति स्त्रीभवाद्यन्नजीविताः ॥ ७४ ॥

स्वधर्मं विब्रूयाद्यस्तु अधर्मं वर्णतेनरः । परदोषप्रवादी च परच्छिद्रावलो
परद्रव्याभिलाषी च परदारावलोककः । एते गोघ्नसमानाश्च ज्ञातव्या नृप
यःकर्ता सर्वशास्त्राणां गोहर्तागोश्च विक्रयी । निर्दयोऽतीवभृत्येषु पशूनां
मिथ्या प्रवदते धावनाकर्णयत्तियः परैः । स्वामिद्रोही गुरुद्रोही मायावी

यो भार्या पुत्रमित्राणि बालवृद्धकृशातुरान् ।

भृत्यानतिथिबन्धूंश्च त्यक्त्वाऽश्नाति बुभुक्षितान् ॥ ७९ ॥
यस्तुमृष्टं समश्नाति नो वाप्यन्नं ददाति च ।
पृथक्पाकी सविज्ञेयो ब्रह्मवादिषु गर्हितः ॥ ८० ॥
मान्स्वयमादाय ये त्यजन्त्यजितेन्द्रियाः । प्रव्रज्यागमितायैश्च संयुक्तायेच मद्यपैः
ये चापि क्षयरोगार्ता गांपिपासा क्षुधातुराम् ।
न पालयन्ति यत्नेन ते गोघ्ना नारकाःस्मृताः ॥ ८२ ॥
पापरता ये च चतुष्पात्क्षेत्रभेदकाः । साधून्विप्रान्गुरूंश्चैव यश्चगां हि प्रताडयेत् ॥
ये ताडयन्त्य दोषां च नारीं साधु पदे स्थिताम् ।
आलस्यबद्ध सर्वाङ्गो यःस्वपिति मुहुर्मुहुः ॥ ८४ ॥
लांश्च न पुष्णन्ति नष्टान्नान्वेषयन्ति च । पीडयन्त्यतिभारेण सक्षतान्वाहयन्ति च
पापरता ये च संयुक्ता ये च भुञ्जते । भग्नाङ्गीं क्षतरोगार्तां गोरूपां च क्षुधातुराम्
पालयन्ति यत्नेन तेजना नारकाःस्मृताः। वृषाणां वृषणौ ये च पापिष्ठाघातयन्ति च
वाधयन्ति च गोवत्सान्महानारकिणो नराः ।
आशयासमनुप्राप्तं क्षुत्तृषाश्रमपीडितम् ॥ ८८ ॥
तिथिं न मन्यन्ते ते वै निरयगामिनः । अनाथं विकलं दीनं बालं वृद्धं भृशातुरम्
नुकम्पन्तिये मूढास्ते यान्तिनरकार्णवम् । अजाविको माहिषिको यःशूद्रावृषलीपतिः
विप्रस्यक्षत्रस्य ये आचारेण वर्तते । शिल्पिनःकारवोवैद्यास्तथादेवलकानराः ॥
भृतकामात्यकर्माणःसर्वे निरयगामिनः ।
यश्चोदितमतिक्रम्य स्वेच्छया आहरेत्करम् ॥ ९२ ॥
षु सपच्येत यश्च दण्डं वृथा नयेत् । उत्कोचकैरधिकृतैस्तस्करैश्चप्रपीड्यते॥९३॥
राज्ञाःप्रजा राज्ये पच्यते नरकेषु सः । ये द्विजाःप्रतिगृह्णन्ति नृपस्यान्यायवर्तिनः
न्ति तेऽपि घोरेषु नरकेषु न संशयः । परदारिक चौराणां यत्पापं पार्थिवस्य च
भवत्यरक्षतो घोरो राज्ञस्तस्य परिग्रहः ।
अचोरं चौरवधश्च चौरं चाचौरवत्पुनः ॥ ९६ ॥

अविचार्य नृपःकुर्यात्सोऽपि वै नरकं व्रजेत् । घृत तैलान्नपानादि मधुमांस सुरा
गुडेक्षु क्षीर शाकादि दधिमूल फलानि च । तृणकाष्ठं पुष्पपत्रं कांस्यं रजतमे
उपानच्छत्र कटक शिबिकामासनं मृदु । ताम्रं सीसं त्रपुकांस्यं शङ्खाद्यं च ज
वादित्रं वेणुवंशाद्यं गृहोपस्करणानि च ।
ऊर्णाकार्पास कौशेय रङ्गपट्टोद्भवानि च ॥ १०० ॥
तूलं सूक्ष्माणि वस्त्राणि ये लोभेन हरन्ति च ।
एवमादीनि चान्यानि द्रव्याणि विविधानि च ॥ १०१ ॥
नरकेषु द्रुतं गच्छेदपहृत्याल्पकान्यपि । यद्वा तद्वा परद्रव्यमपि सर्षपमात्रकम् ।
अपहृत्य नरोयाति नरके नात्रसंशयः । बह्वल्पकाद्यपि तथा परस्य ममता कृतम् ।
अपहृत्य नरोयाति नरके नात्रसंशयः । एवमाद्यैर्नरःपापैरुत्क्रान्ति समनन्तरम् ।
शरीर घातनार्थाय पूर्वाकारमवाप्नुयात् ।
यमलोकं व्रजन्त्येते शरीरस्था यमाज्ञया ॥ १०५ ॥
यमदूतैर्महाघोरैर्नीयमानाःसुदुःखिताः । देवतीर्यङ् मनुष्याणामधर्मनियतात्म
धर्मराजःस्मृतःशास्ता सुघोरैर्विविधैर्वधैः ।
विनयाचारयुक्तानां प्रमादान्मलिनात्मनाम् ॥ १०७ ॥
प्रायश्चितैर्गुरुःशास्ता न च तैरीक्ष्यते यमः । पारदारिकचौराणामन्याय व्यवह
नृपतिःशासकःप्रोक्तःप्रच्छन्नानां च धर्मराट् । तस्मात्कृतस्यपापस्य प्रायश्चित्तं
नाभुक्तस्यान्यथा नाशःकल्पकोटिशतैरपि ।
यःकरोति स्वयंकर्म कारयेद्वाऽनुमोदयेत् ॥ ११० ॥
कायेन मनसावाचा तस्यचाधोगतिःफलम् । इति संक्षेपतःप्रोक्ताःपापभेदा
कथ्यन्ते गतयश्चित्रा नराणां पापकर्मणाम् ।
एतत्ते नृपतेऽधर्म फलं प्रोक्तं सुविस्तरात् ॥ ११२ ॥
अन्यत्किं ते प्रवक्ष्यामि तन्मेब्रूहि नरोत्तम । अधर्मस्य फलं प्रोक्तं धर्मस्यापि
इत्याह मातलिस्तत्र राजानं सर्ववत्सलम् ।

तस्मिन्धर्मप्रसङ्गेन इत्याख्यातं महात्मना ॥ ११४ ॥

इति श्री पाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने पितृतीर्थवर्णने ययातिचरित्रे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः

### सुकृतकर्मफलकथनम् ।

ययातिरुवाच ।

धर्मस्य फलं सूत श्रुतं सर्वं मया विभो । धर्मस्यापि फलं ब्रूहि श्रोतुं कौतूहलं मम

मातलिरुवाच ।

अथ पापैरिमे यान्ति यमलोकं चतुर्विधा । सन्त्रासजननं घोरं विवशाःसर्वदेहिनः ॥२॥

गर्भस्थैर्जायमानैश्च बालैस्तरुण मध्यमैः । पुंस्त्रीनपुंसकैर्वृद्धैर्यातव्यं जन्तुभिस्ततः ॥३॥

शुभाशुभफलं तत्र देहिनां प्रविचार्यते ।
चित्रगुप्तादिभिःसर्वैर्मध्यस्थैःसर्वदर्शिभिः ॥ ४ ॥

तेऽत्रप्राणिनःसन्ति येन यान्तियमक्षयम् । अवश्यं हि कृतंकर्म भोक्तव्यंतद्विचारितम्

तत्र शुभकर्माणःसौम्यचित्तादयान्विताः । ते नरा यान्ति सौम्येन पथायमनिकेतनम्

प्रदद्याच्च विप्राणामुपानत्काष्ठपादुके । स विमानेन महता सुखंयाति यमालयम् ॥ ७॥

छत्रदानेन गच्छन्ति पथा साभ्रेणदेहिनः ।
दिव्यवस्त्र परीधाना यान्ति वस्त्रप्रदायिनः ॥ ८ ॥

शिबिकायाःप्रदानेन विमानेन सुखं व्रजेत् । सुखासन प्रदानेन सुखंयान्ति यमालयम् ॥

आरामकर्ता छायासु शीतलासु सुखंव्रजेत् । यान्ति पुष्पकयानेन पुष्पाराम प्रदायिनः

देवायतनकर्ता च यतीनामाश्रमस्य च । अनाथमण्डपानां च क्रीडन्याति गृहोत्तमैः ॥



देवाग्नि गुरुविप्राणां मातापित्रोश्च पूजकः ॥ १२ ॥

विप्रेषु दीनेषु गुणान्वितेषु यच्छ्रद्धया स्वल्पमपि प्रदत्तम्।
तत्सर्वकामान्समुपैति लोके श्राद्धे च दानं प्रवदन्ति सन्तः ॥ १३ ॥
श्रद्धादानेन विज्ञेयमपि वालाग्रमात्रकम्। यत्पात्रादि चतुष्टयं श्रद्धा तेषु सदा
श्रद्धीयतेसदातस्माच्छ्रद्धायास्तत्फलं भवेत्। गुणान्वितेषु दीनेषुयच्छक्त्यावस
स प्रयाति सर्वकामं स्थानंपैतामहं नृप।
श्रद्धया येन विप्राय दत्तं काकिणिमात्रकम् ॥ १६ ॥
स स्याद्दिव्यातिथिर्भूप देवानां कीर्तिवर्धनः। तस्माच्छ्रद्धान्वितैर्देयंतत्फलं भवे

इति श्री पाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने मातृपितृतीर्थवर्णने ययाति
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

## ऊनसप्ततितमोऽध्यायः

### विविधशिवधर्मकथनम्।

मातलिरुवाच।

अथ धर्माःशिवेनोक्ताःशिवधर्मागमोत्तमाः। ज्ञेया बहुविधास्ते च कर्मयोग प्र
हिंसादिदोषनिर्मुक्ताःक्लेशायासविवर्जिता। सर्वभूतहिताःशुद्धाःसूक्ष्माया सा म
अनन्तशाखाकलिताःशिवमूलैकसंश्रिताः। ज्ञानध्यानसुपुष्पाढ्याःशिवधर्माःस
धारयन्ति शिवंयस्माद्धार्यते शिवभाषितैः।
शिवधर्माःस्मृतास्तस्मात्संसारार्णवतारकाः ॥ ४ ॥
तथाऽहिंसा क्षमा सत्यं ह्रीःश्रद्धेन्द्रियसंयमः। दानमिज्या तपोदानं दशकं धर्म
अथव्यस्तैःसमस्तैर्वा शिवधर्मैरनुष्ठितैः। शिवैकरस्य सम्प्राप्तैर्गतिरेकैव का
यथाभूःसर्वभूतानां स्थानं साधारणं स्मृतम्।
तत्तथा शिवभक्तानां तुल्यं शिवपुरं स्मृतम् ॥ ७ ॥

ह सर्वभूतानां भोगाःसातिशयाःस्मृताः । नानापुण्यविशेषेण भोगाःशिवपुरे तथा
शुभफलंचापि भुज्यते सर्वदेहिभिः । शिवधर्मस्य चैकस्य फलं तत्रोपभुज्यते ॥
यादृग्भवेत्पुण्यं श्रद्धापात्र विशेषतः। भोगाःशिवपुरे तस्य ज्ञेयाःसातिशयाःशुभाः

स्थानप्राप्तिःपरंतुल्या भोगाःशान्तिमयाःस्थिताः ।
कुर्यात्पुण्यं महत्तस्मान्महाभोगजिगीषया ॥ ११ ॥

तिशयमेवैकं भावितं च सुरोत्तमैः । आत्मभोगाधिपत्यंस्याच्छिवःसर्वजगत्पतिः
तत्रैव मुच्यन्ते ज्ञानयोगरता नराः । आवर्तन्ते पुनश्चान्ये संसारेभोगतत्पराः ॥

तस्माद्विमुक्तिमिच्छंस्तु भोगासक्तिं च वर्जयेत् ।
विरक्तःशान्तिचित्तात्मा शिवज्ञानमवाप्नुयात् ॥ १४ ॥

पीशान्यहृदया यजन्तीशं प्रसङ्गतः । तेषामपि ददादीशःस्थानं भावानुरूपतः ॥
र्चयन्ति ये रुद्रं स कृदुच्छिन्न कल्मषाः । तेषां पिशाचलोकेषु भोगानीशःप्रयच्छति
प्तादुःखभारेण म्रियन्तेसर्वदेहिनः । अन्नदःपुण्यदःप्रोक्तःप्राणदश्चापि सर्वदः ॥१७॥

तस्मादन्नप्रदानेन सर्वदानफलं लभेत् ।
त्रैलोक्ये यानिरत्नानि भोगस्त्रीवाहनानि च ॥ १८ ॥

दानप्रदःसर्वमिहामुत्रफलं लभेत् । यस्यान्नपान पुष्टाङ्गःकुरुते पुण्यसञ्चयम् ॥
प्रदातुस्तस्यार्धं कर्तुश्चार्धं न संशयः । धर्मार्थकाममोक्षाणां देहः परमसाधनम् ॥

स्थितिस्तस्यान्नपानाभ्यामतस्तत्सर्वसाधनम् ।
अन्नं प्रजापतिःसाक्षादन्नंविष्णुःशिवःस्वयम् ॥ २१ ॥

ादन्नसमंदानं न भूतं न भविष्यति । त्रयाणामपि लोकानामुदकं जीवनंस्मृतम् ॥
त्रमुदकंदिव्यं शुद्धंसर्वरसायनम् । अन्नपानाश्वगो वस्त्र शय्यासूत्रासनानि च ॥

प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः ।
एवंदानविशेषेण धर्मराज पुरं नरः ॥ २४ ॥

यातिसुखेनैव तस्माद्धर्मं समाचरेत् । ये पुनःक्रूरकर्माणः पापादानविवर्जिताः ॥
ते दारुणंदुःखं नरके नृपनन्दन । तथासुखं प्रभुञ्जन्ति दानकर्तार एव तु ॥ २६ ॥

तेषां तु सम्भवेत्सौख्यं कर्मयोगरतात्मनाम् । अप्रमेयगुणैर्दिव्यैर्विमानैःसर्वत
असङ्ख्यैस्तत्पुरंव्याप्तं प्राणिनामुपकारकैः ।
सहस्रसोमदिव्यं वा सूर्यतेजःसमप्रभम् ॥ २८ ॥
रुद्रलोकमितिप्रोक्तमशेषगुणसंयुतम् । सर्वेषांशिवभक्तानां तत्पुरं परिकी
रुद्रक्षेत्रे मृतानां च जङ्गमस्थावरात्मनाम् । अप्येकदिवसं भक्त्या यः पूजयति
सोऽपि याति शिवस्थानं किंपुनर्बहुशोऽर्चयन् ।
वैष्णवा विष्णुभक्ताश्च विष्णुध्यानपरायणाः ॥ ३१ ॥
तेऽपिगच्छन्ति वैकुण्ठे समीपं देवचक्रिणः। ब्रह्मवादी च धर्मात्मा ब्रह्मलोकं
पुण्यकर्तासु पुण्येन पुण्यलोकं प्रयाति च । तस्मादीशे सदाभक्तिं भावयेदात्
हरौवापि महाराज युक्तात्मा ज्ञानवान्स्वयम् ।
तस्मात्सर्वविचारेण भावदोष विचारतः ॥ ३४ ॥
एवं विष्णुप्रभावेन विशिष्टेनापि कर्मणा । नरैःस्थानमवाप्येत देशभाव
इत्येतदपरंप्रोक्त श्रीमच्छिवपुरंमहत् । देहिनां कर्मनिष्ठानां पुनरावर्त्तकं स्मृ
ऊर्द्ध्वं शिवपुराज्ज्ञेयं वैष्णवंलोकमुत्तमम् ।
वैष्णवामानवा यान्ति विष्णुध्यानपरायणाः ॥ ३७ ॥
ब्राह्मणा ब्रह्मलोकं तु सदाचारा नरोत्तमाः। प्रयान्ति यज्विनःसर्वे पुरींतांतत्
ऐन्द्रलोकं तथा यान्ति क्षत्रिया युद्धशालिनः ।
अन्ये च पुण्यकर्त्तारःपुण्यलोकान्प्रयान्ति ते ॥ ३९ ॥
इति श्री पाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने पितृतीर्थे ययाति
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

# सप्ततितमोऽध्यायः

## महादारुणयमलोकपीड़ावर्णनम् ।

मातलिरुवाच ।

पीडां प्रवक्ष्यामि महातीव्रां सुदारुणाम् । भुञ्जते पापिनःसर्वे क्रूरास्ते ब्रह्मघातकाः
चित्पापाःप्रपच्यन्ते तीव्रेण करिषाग्निना । क्वचित्सिंहैर्वृकैर्व्याघ्रैर्दंशैःकीटैश्च दारुणैः
चिन्महाजलौकाभिःक्वचिदाजगरैःपुनः । मक्षिकाभिश्च रौद्राभिःक्वचित्सर्पैर्विषोल्वणैः
मातङ्गयूथैश्च बलोत्कृष्टैःप्रमाथिभिः । पन्थानमुल्लिखद्भिश्च तीक्ष्णशृङ्ग महावृषैः ॥

महाशृङ्गैश्च महिषैर्दुष्टगात्र प्रबाधकैः ।
डाकिनीभिश्च रौद्राभिर्विकरालैश्च राक्षसैः ॥ ५ ॥

धिभिश्च महाघोरैःपीड्यमाना व्रजन्ति ते । महातुलांसमारूढा दह्यमाना दवानलैः
वेगप्रधूतास्ते महाचण्डेन वायुना । महापाषाणवर्षेण भिद्यमानाश्च सर्वतः ॥
र्वज्रनिर्घोषैरुल्कापातैश्च दारुणैः । प्रदीप्ताङ्गारवर्षेण हन्यमाना व्रजन्ति ते ॥

महतापां सुवर्षेण पूर्यमाणा यमङ्कताः ।
ये नराःपापकर्माणःपापंभुञ्जन्ति दारुणम् ॥ ६ ॥
एवं पापविशेषेण पापिष्ठाःपापकारकाः ।
नरकं प्रतिभुञ्जन्ति बहुपीडा समाकुलम् ॥ १० ॥

तेसर्वमाख्यातं विवेकं पुण्यपापयोः । अन्यत्किं ते प्रवक्ष्यामि धर्मशास्त्रमनुत्तमम्
इति श्री पाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने पितृतीर्थवर्णने ययातिचरित्रे
सप्ततितमोऽध्यायः ॥ ७० ॥

———

# एकसप्ततितमोऽध्यायः

## देवलोकसंस्थानवर्णनम् ।

ययातिरुवाच ।

यत्त्वयासर्वमाख्यातं धर्माधर्ममनुत्तमम् । शृण्वतोऽथ ममश्रद्धा पुनरेव प्रवर्तते
देवानां लोकसंस्थानां वदसङ्ख्याःप्रकीर्तिताः । यस्यपुण्यप्रसङ्गेन येनप्राप्तं च

मातलिरुवाच ।

योगयुक्तं प्रवक्ष्यामि तपसायदुपार्जितम् । देवानां लोकसंस्थानं सुखभोगप्रद
धर्मभावं प्रवक्ष्यामि आयासैरर्जितं पृथक् । उपरिष्टाच्च लोकानांस्वरूपंचाप्यु

तत्राष्टगुणमैश्वर्यं पार्थिवं पिशिताशिनाम् ।

तस्मात्सद्योगतानां च नराणां तत्समं स्मृतम् ॥ ५ ॥

रक्षसां षोडशगुणं पार्थिवानां च तद्विधम् । एवं निरवशेषं च यच्छेषं कुल

गन्धर्वाणां च वायव्यं याक्षं च सकलं स्मृतम् ।

पाञ्चभौतिकमिन्द्रस्य चत्वारिंशद्गुणंमहत् ॥ ७ ॥

सोमस्य मानसं दिव्यंविश्वेशंपाञ्चभौतिकम् । सौम्यंप्रजापतीशानामहङ्कारगुण
चतुष्षष्टिगुणंब्राह्मं बौधमैश्वर्यमुत्तमम् । विष्णोःप्राधानिकं तन्त्रमैश्वर्यं ब्रह्मणः
श्रीमच्छिवपुरेदिव्ये ऐश्वर्यं सर्वकामिकम् । अनन्तगुणमैश्वर्यं शिवस्यात्मगुणं

आदिमध्यान्तरहितं विशुद्धं तत्त्वलक्षणम् ।

सर्वावभासकं सूक्ष्ममनौपम्यं परात्परम् ॥ ११ ॥

सुसम्पूर्णं जगद्वेषं पशुपाश विमोक्षणम् । यो यत्स्थानमनुप्राप्तस्तस्य भोगस्त
विमानं तत्समानं च भवेदीश प्रसादतः। नानारूपाणि ताराणां दृश्यन्तेकोटयः

अष्टाविंशतिरेवं ते सन्दीप्ताःसुकृतात्मनाम् ।



ये कुर्वन्ति नमस्कारमीश्वराय क्वचित्क्वचित् ॥ १४ ॥

र्कात्कौतुकाल्लोभात्तद्विमानं लभन्ति ते। नामसङ्कीर्तनाद्वापि प्रसङ्गेन शिवस्य यः
द्वापि नमस्कारं न तस्य विलयो भवेत्। इत्येतागतयस्तत्र महत्यःशिवकर्मणि ॥
णाम्यन्तरेणापि पुंसामीशानभावतः। प्रसङ्गेनापि ये कुर्युःशङ्करस्मरणंनराः ॥१७॥

तैर्लभ्यंत्वतुलंसौख्यं किंपुनस्तत्परायणैः।
विष्णुचिन्तां प्रकुर्वन्ति ध्यानेन गतमानसाः ॥ १८ ॥

न्ति परमंस्थानं तद्विष्णोःपरसंपदम्। शैवं च वैष्णवं रूपमेकरूपं नरोत्तम ॥१९॥
श्च अन्तरंनास्ति एकरूप महात्मनोः। शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ॥
स्य हृदयं विष्णुर्विष्णोश्च हृदयंशिवः। एकमूर्तिस्त्रयोदेवा ब्रह्मविष्णुमहेश्वराः ॥

त्रयाणामन्तरंनास्ति गुणभेदाःप्रकीर्तिताः।
शिवभक्तोऽसि राजेन्द्र तथा भागवतोऽसि वै ॥ २२ ॥
तेन देवाःप्रसन्नास्ते ब्रह्मविष्णुमहेश्वराः।
सुप्रीता वरदा राजन्कर्मणस्तव सुव्रत ॥ २३ ॥

देशात्समायातःसन्निधौ तवमानद। ऐन्द्रमेनं पदंयाहि पश्चाद्ब्राह्मंमहेश्वरम्॥२४॥
वं च प्रयाहि त्वं दाहप्रलयवर्जितम्। अनेनापि विमानेन दिव्येन सर्वगामिना ॥

दिव्यमूर्तिरतोभुङ्क्ष्व दिव्यभोगान्मनोरमान्।
समारुह्य विमानं त्वं पुष्पकं सुखगामिनम् ॥ २६ ॥

सुकर्मोवाच।

युक्त्वा द्विजश्रेष्ठ मौनवान्मातलिस्तदा। राजानं धर्मतत्त्वज्ञं ययातिं नहुषात्मजम् ॥

इतिश्री पाद्मपुराणे द्वितीयेभूमिखण्डेवेनोपाख्यानेमातापितृतीर्थेययातिचरित्रे
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

# द्विसप्ततितमोऽध्यायः

## ययातिनास्वशरीरप्रसंसापूर्वकं स्वर्गागमनास्वीकरणम्।

पिप्पल उवाच।

मातलेश्च वचःश्रुत्वा सराजा नहुषात्मजः। किंचकार महाप्राज्ञस्तन्मे विस्त
सर्वपुण्यमयीपुण्या कथेयं पोपनाशिनी। श्रोतुमिच्छाम्यहं प्राज्ञ नैवतृप्यामि

सुकर्मोवाच।

सर्वधर्मभृतांश्रेष्ठो ययातिर्नृपसत्तमः। तमुवाचागतंदूतं मातलिं शक्रसार
शरीरंनैवत्यक्ष्यामि गमिष्ये न दिवं पुनः। शरीरेणविनादूत पार्थिवेन न सं
यद्यप्येवं महादोषाःकायस्यैव प्रकीर्तिताः। पूर्वंचापि समाख्यातंत्वयासर्वं

नाहंत्यक्ष्ये शरीरं वै नागमिष्ये दिवंपुनः।
इत्याचक्ष्व इतोगत्वा देवदेवं पुरन्दरम्॥ ६॥

एकाकिना हि जीवेन कायेनापि महामते। नैवसिद्धिं प्रयात्येवं सांसारि
नैव प्राणंविनाकायो जीवःकायंविना न हि। उभयोश्चापि मित्रत्वं नयि

यस्य प्रसादभावाद्वै सुखमश्नाति केवलम्।
शरीरस्याप्ययं प्राणो भोगानन्यान्मनोऽनुगान्॥ ९॥
एवंज्ञात्वा स्वर्गभोग्यं न भोज्यं देवदूतक।
सम्भवन्ति महादुष्टा व्याधयो दुःखदायकाः॥ १०॥

मातले किल्बिषाच्चैव जरादोषात्प्रजायते। पश्य मे पुण्यसंयुक्तं कायं षोड
जन्मप्रभृति मे कायःशतार्धाब्दंप्रयाति च। तथापि नूतनोभावःकायस्यापि

ममकालोगतो दूत अब्दानांशतमुत्तमम्।
यथा षोडशवर्षस्य कायःपुंसःप्रशोभते॥ १३॥



यथा मे शोभतेदेहो बलवीर्यसमन्वितः। नैवग्लानिर्न मे हानिर्नश्रमो व्या

…मे ममकायोऽपि धर्मोत्साहेन वर्द्धते। सर्वामृतमयं दिव्यमौषधं परमौषधम् ॥
पापव्याधि प्रणाशार्थं धर्माख्यंहि कृतम्पुरा।
तेन मे शोधितःकायो गतदोषस्तु जायते ॥ १६ ॥
…शस्य सन्धानं नामोच्चारणमुत्तमम्। एतद्रसायनं दूत नित्यमेवं करोम्यहम् ॥
तेन मे व्याधयो दोषाः पापाद्याःप्रलयंगताः।
विद्यमाने हि संसारे कृष्णनाम्नि महौषधे ॥ १८ ॥
…था मरणंयान्ति पापव्याधि प्रपीडिताः। न पिबन्तिमहामूढाःकृष्णनामरसायनम्
…ध्यानेन ज्ञानेन पूजाभावेन मातले। सत्येन दानपुण्येन ममकायो निरामयः ॥२०॥
पापर्दुरामयाःपीडाःप्रभवन्ति शरीरिणः।
पीडाभ्यो जातयेमृत्युःप्राणिनां नात्रसंशयः ॥ २१ ॥
…द्धर्मःप्रकर्तव्यःपुण्यसत्याश्रयैर्नरैः। पञ्चभूतात्मकःकायःशिरासन्धिविजर्जरः ॥
एवं सन्धीकृतोमर्त्यो हेमकारीव टङ्कणैः
तत्रभाति महानग्निर्द्धातुरेवचरःसदा ॥ २३ ॥
…ण्डमये विप्रःथ संधत्ते स बुद्धिमान्। हरेर्नाम्ना च दिव्येन सौभाग्येनापि पिप्पलः
…त्मकाहिये खण्डाशतसन्धिविजर्जराः। तेनसन्धारिताःसर्वे कायोधातुसमोभवेत्
हरेःपूजोपचारेण ध्यानेन नियमेन च।
सत्यभावेन दानेन नूत्नःकायो विजायते ॥ २६ ॥
…नश्यन्ति कायस्य व्याधयःशृणुमातले। बाह्याभ्यन्तरशोचं हि दुर्गन्धिर्नैवजायते
…स्ततो भवेत्सूत प्रसादात्तस्य चक्रिणः। नाहं स्वर्गंगमिष्यामिस्वर्गमत्रकरोम्यहम्
…चैव भावेन स्वधर्मेण महीतलम्। स्वर्गरूपं करिष्यामि प्रसादात्तस्यचक्रिणः ॥
एवं ज्ञात्वा प्रयाहि त्वं कथयस्व पुरन्दरम् ॥ ३० ॥

सुकर्मोवाच।

…कर्ण्यततः सूतो नृपतेःपरिभाषितम्। आशीर्भिरभिनन्द्याथ आमन्त्र्य नृपतिंगतः
निवेदयामास इन्द्राय च माहात्म्यं। समाकर्ण्य सहस्राक्षो ययातेस्तु महात्मनः

तस्याथ चिन्तयामासानयनार्थं दिवंप्रति ॥ ३३ ॥

इतिश्रीपाद्मपुराणे द्वितीयेभूमिखण्डेवेनोपाख्यानेमातापितृतीर्थेययातिचरिते द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

## त्रिसप्ततितमोऽध्यायः

### ययातिना स्वराज्येविष्णुसेवाज्ञोद्घोषणम् ।

पिप्पल उवाच ।

गतेतस्मिन्महाभागे दूतइन्द्रस्य वै पुनः । किंचकार सधर्मात्मा ययातिर्नहुषात्मजः ॥ १ ॥

सुकर्मोवाच ।

तस्मिन्गते देववरस्यदूते सचिन्तयामास नरेन्द्रसूनुः ।
आहूयदूतान्प्रवरान्ससत्वरं धर्मार्थयुक्तंवच आदिदेशः ॥ २ ॥
गच्छन्तुदूताःप्रवराःपुरोत्तमे देशेषु द्वीपेष्वखिलेषुलोके ।
कुर्वन्तुवाक्यं ममधर्मयुक्तं व्रजन्तु लोकाःसुपथा हरेश्च ॥ ३ ॥
भावैःसुपुण्यैरमृतोपमानैर्ध्यानैश्चज्ञानैर्यजनैस्तपोभिः ।
यज्ञैश्च दानैर्मधुसूदनैकमर्चन्तुलोकाविषयान्विहाय ॥ ४ ॥
सर्वत्र पश्यन्त्वसुरारिमेक शुष्केषुचार्द्रेष्वपि स्थावरेषु ।
अभ्रेषु भूमौ सचराचरेषु स्वीयेषु कायेष्वपि जीवरूपम् ॥ ५ ॥
देवंतमुद्दिश्य दिशन्तु दानमातिथ्यभावैःपरिपैत्रिकैश्च ।
नारायणं देववरंयजध्वं दोषैर्विमुक्ता अचिराद्भविष्यथ ॥ ६ ॥
यो मामकं वाक्यमिहैव मानवो लोभाद्विमोहादपिनैव कारयेत् ।
स शास्यतां यास्यति निर्घृणोध्रुवं ममापि चौरो हि यथानिकृष्टः ॥ ७ ॥
आकर्ण्यवाक्यं नृपतेश्चदूताःसंहृष्टभावाःसकलां च पृथ्वीम् ।

आचख्युरेवं नृपतेःप्रणीतमादेशभावं सकलं प्रजासु ॥ ८ ॥
विप्रादिमर्त्या अमृतंसुपुण्यमानीतमेवं भुवितेन राज्ञा ।
पिबन्तु पुण्यं परिवैष्णवाख्य दोषैर्विहीनं परिणाममिष्टम् ॥ ९ ॥
श्रीकेशवं क्लेशहरं वरेण्यमानन्दरूपं परमार्थमेवम् ।
नामामृतं दोषहरं सुराज्ञा आनीतमस्त्येव पिबन्तुलोकाः ॥ १० ॥
सखड्गपाणिं मधुसूदनाख्यं तं श्रीनिवासं सगुणंसुरेशम् ।
नामामृतं दोषहरं सुराज्ञा आनीतमस्त्वेव पिबन्तुलोकाः ॥ ११ ॥
श्रीपद्मनाभं कमलेक्षणं च आधाररूपं जगतां महेशम् ।
नामामृतं दोषहरं सुराज्ञा आनीतमस्त्येव पिबन्तुलोकाः ॥ १२ ॥
पापापहं व्याधिविनाशरूपमानन्ददं दानवदैत्यनाशम् ।
नामामृतं दोषहरं सुराज्ञा आनीतमस्त्येव पिबन्तुलोकाः ॥ १३ ॥
यज्ञाङ्गरूपं च रथाङ्गपाणिं पुण्याकरं सौख्यमनन्तरूपम् ।
नामामृतं दोषहरं सुराज्ञा आनीतमस्त्येव पिबन्तुलोकाः ॥ १४ ॥
विश्वाधिवासं विमलं विरामं रामाभिधानं रमणं मुरारिम् ।
नामामृतं दोषहरं तु राज्ञा आनीतमस्त्येव पिबन्तुलोकाः ॥ १५ ॥
आदित्यरूपं तमसांविनाशं बन्धस्यनाशंमतिपङ्कजानाम् ।
नामामृतं दोषहरं सुराज्ञा आनीतमस्त्येव पिबन्तुलोकाः ॥ १६ ॥
नामामृतं सत्यमिदं सुपुण्यमधीत्य यो मानव विष्णुभक्तः ।
प्रभातकाले नियतो महात्मा सयातिमुक्तिं न हि कारणं च ॥ १७ ॥

इतिश्रीपाद्मपुराणे द्वितीयेभूमिखण्डेवेनोपाख्याने पितृतीर्थवर्णनेययातिचरिते त्रिसप्ततितमोऽध्यायः ।

---

# चतुःसप्ततितमोऽध्यायः

नृपाज्ञाश्रवणोत्तरंसर्वैःप्रजाजनैर्भागवतधर्मस्वीकरणम् ।

सुकर्मोवाच ।

दूतास्तु ग्रामेषु वदन्ति सर्वे द्वीपेषु देशेष्वथपत्तनेषु ।
लोकाःशृणुध्वं नृपतेस्तदाज्ञां सर्वप्रभावैर्हरिमर्चयन्तु ॥ १ ॥
दानैश्चयज्ञैर्बहुभिस्तपोभिर्धर्माभिलाषैर्यजनैर्मनोभिः ।
ध्यायन्तुलोका मधुसूदनं तु आदेशमेवं नृपतेस्तु तस्य ॥ २ ॥
एवं सुघुष्टं सकलं तु पुण्यमाकर्ण्य तं भूमितलेषुलोकैः ।
तदाप्रभृत्येव जयन्ति विष्णुं ध्यायन्ति गायन्ति जपन्ति मर्त्याः ॥ ३
वेदप्रणीतैश्च सुसूक्तमन्त्रैःस्तोत्रैःसुपुण्यैरमृतोपमानैः ।
श्रीकेशवंतद्गतमानसास्ते व्रतोपवासैर्नियमैश्चदानैः ॥ ४ ॥
विहायदोषान्निजकायचित्त वागुद्भवान्प्रेमरताःसमस्ता ।
लक्ष्मीनिवासं जगतांनिवासं श्रीवासुदेवं परिपूजयन्ति ॥ ५ ॥
इत्याज्ञातस्यभूपस्य वर्ततेक्षितिमण्डले । वैष्णवेनापि भावेन जनाःसर्वेऽ
नामभिःकर्मभिर्विष्णुं यजन्ते ज्ञानकोविदाः ।
तद्ध्यानास्तद्व्यवसिता विष्णुपूजापरायणाः ॥ ७ ॥
यावद्भूमण्डलं सर्वं यावत्तपतिभास्करः । तावद्भिमानवालोकाःसर्वेभागवता
विष्णोर्ध्यानप्रभावेनपूजास्तोत्रेणनामतः । आधिव्याधिविहीनास्तेसञ्जाता मा
वीतशोकाश्चपुण्याश्च सर्वेचैवतपोधनाः । सञ्जाता वैष्णवाविप्र प्रसादात्तस्य
आमयैश्च विहीनास्ते दोषैरोषैश्च वर्जिताः ।
सर्वैश्वर्यं समापन्नाःसर्वरोगविवर्जिताः ॥ ११ ॥
प्रसादाद्यस्यदेवस्य सञ्जातामानवास्तदा । अमराःनिर्जरासर्वेधनधान्यसम

[...]विष्णुप्रसादेन पुत्रपौत्रैरलङ्कृताः । तेषामेव महाभाग गृहद्वारेषु नित्यशः ॥
[...]द्रुमाःसुपुण्यास्ते सर्वकामफलप्रदाः । सर्वकामदुघा गावःसचिन्तामणयस्तथा ॥
[...]त तेषां गृहेपुण्याःसर्वकामप्रदायकाः । अमरामानवाजाताःपुत्रपौत्रैरलङ्कृताः ॥
सर्वदोषविहीनास्ते विष्णोश्चैव प्रसादतः ।
सर्वसौभाग्यसम्पन्नाः पुण्यमङ्गलसंयुताः ॥ १६ ॥
[...]ण्यादानसम्पन्ना ज्ञानध्यानपरायणाः । न दुर्भिक्षं न च व्याधिर्नाकालमरणंनृणाम्
तस्मिञ्शासति धर्मज्ञे ययातौ नृपतौ तदा ।
वैष्णवा मानवाःसर्वे विष्णुव्रतपरायणाः ॥ १८ ॥
तद्ध्यानास्तद्गताःसर्वे सञ्जाता भावतत्पराः ।
तेषां गृहाणि दिव्यानि पुण्यानि द्विजसत्तम ॥ १९ ॥
पताकाभिःसुशुक्लाभिःशङ्खयुक्तानि तानि वै ।
गदाङ्कितध्वजाभिश्च नित्यं चक्राङ्कितानि च ॥ २० ॥
[...]ङ्कितानि भासन्ते विमानप्रतिमानि च । गृहाणिभित्तिभागेषुचित्रितानि सचित्रकैः
[...]गृहद्वारेषु पुण्यस्थानेषु सत्तमाः । वनानिसन्ति दिव्यानि शाद्वलानि शुभानि च
तुलस्या च द्विजश्रेष्ठ तेषु केशवमन्दिरैः ।
भासन्ते पुण्यदिव्यानि गृहाणि प्राणिनां सदा ॥ २३ ॥
[...]वैष्णवोभावो मङ्गलो बहुदृश्यते । शङ्खशब्दाश्चभूलोके मिथःस्फोटरवैस्सखे ॥
[...]न्ते तत्र विप्रेन्द्र दोषपाप विनाशकाः । शङ्खस्वस्तिकपद्मानि गृहद्वारेषु भित्तिषु ॥
विष्णुभक्त्या च नारीभिर्लिखितानि द्विजोत्तम ।
गीतरागसुवर्णैश्च मूर्च्छनातानसुस्वरैः ॥ २६ ॥
गायन्ति केशवंलोका विष्णुध्यानपरायणाः ॥ २७ ॥
हरिं मुरारिं प्रवदन्ति केशवं प्रीत्याजितं माधवमेव चान्ये ।
श्रीनारसिंहं कमलेक्षणं तं गोविन्दमेकं कमलापतिं च ॥ २८ ॥

कृष्णं शरण्यं शरणं जपन्ति रामं च जप्यैःपरिपूजयन्ति ।

दण्डप्रणामैःप्रणमन्ति विष्णुं तद्ध्यानयुक्ताःपरिवैष्णवास्ते ॥ ३६ ॥
इतिश्रीपाद्मपुराणे द्वितीयेभूमिखण्डे वेनोपाख्यानेमातापितृतीर्थवर्णने ययाति
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

# पञ्चसप्ततितमोऽध्यायः

## वैष्णवधर्माचरणेन ययातेः सदातारुण्यं तत्प्रजानां च मृत्युराहित्य

सुकर्मोवाच ।

विष्णुंकृष्णंहरिंरामंमुकुन्दंमधुसूदनम् । नारायणं विष्णुरूपंनारंसिंहंतमच्युतं
केशवं पद्मनाभं च वासुदेवं च वामनम् । वाराहंकमठंमत्स्यं हृषीकेशंसुर
विश्वेशं विश्वरूपं च अनन्तमनघंशुचिम् । पुरुषंपुष्कराक्षं च श्रीधरंश्रीपतिं
श्रीदं श्रीशं श्रीनिवासं माधवं मोक्षदं प्रभुम् ।
इत्यवं हि समुच्चारं नामभिर्मानवाःसदा ॥ ४ ॥
प्रकुर्वन्ति नराःसर्वे बालवृद्धाःकुमारिकाः । स्त्रियो हरिंसुगायन्ति गृहकर्मरता
आसनेशयनेयाने ध्यानेवचसि माधवम् । क्रीडमानास्तथाबाला गोविन्दं प्र
दिवारात्रौ सुमधुरं ब्रुवन्ति हरिनाम च । विष्णूच्चारोहि सर्वत्र श्रूयते द्विजव
वैष्णवेन प्रभावेन मर्त्या वर्तन्ति भूतले ।
प्रासादकलशाग्रेषु देवतायतनेषु च ॥ ८ ॥
यथा सूर्यस्यबिम्बानि तथा चक्राणिभान्ति च ।
वैकुण्ठे दृश्यते भावस्तद्भावं जगतीतले ॥ ६ ॥
तेन आज्ञाकृतं विप्र पुण्यंचापि महात्मना । विष्णुलोकस्य समतां तथानीतं
नहुषस्यापि पुत्रेण वैष्णवेन ययातिना । उभयोर्लोकयोर्भावमेकीभूतं महीत
भूतलस्यापि विप्रेन्द्र अन्तरंनैव दृश्यते । विष्णूचारं तु वैकुण्ठे यथाकुर्व

[...]ले तादृशोचारं प्रकुर्वन्ति च मानवाः । उभयोर्लोकयोर्विप्र एकभावःप्रदृश्यते ॥१३॥

जरारोगभयंनास्ति मृत्युहीना नराबभुः ।

दानभोगप्रभावश्च अधिको दृश्यते भुवि ॥ १४ ॥

पुत्राणां तु सुखं पुण्यमधिकं पौत्रजं नराः ।

प्रभुञ्जन्ति सुखेनापि मानवा भुविसत्तम ॥ १५ ॥

[...]णोःप्रसाददानेन उपदेशेन तस्य च । सर्वव्याधिविनिर्मुक्ता मानवा वैष्णवाःसदा॥

[...]र्लोकप्रभावो हि कृतोराज्ञा महीतले । पञ्चविंशप्रमाणेन वर्षाणि नृपसत्तम ॥१७॥

[...]विज्ञानराःसर्वे ज्ञानध्यानपरायणाः । यज्ञदानपराःसर्वे दयाभावाश्च मानवाः ॥१८॥

[...]काररताःपुण्या धन्यास्ते कीर्तिभाजनाः । सर्वेधर्मपराविप्र विष्णुध्यानपरायणाः ॥

राज्ञातेनोपदिष्टास्ते सञ्जाता वैष्णवा भुवि ।

श्रूयतां नृपशार्दूल चरित्रं तस्य भूपतेः ॥ २० ॥

सर्वधर्मपरोनित्यं विष्णुभक्तश्च नाहुषिः ।

अब्दानां तत्रलक्षं हि तस्याप्येवं गतंभुवि ॥ २१ ॥

[...]नो दृश्यते कायःपञ्चविंशाब्दिको यथा । पञ्चविंशाब्दिकोभाति रूपेणवयसा तदा

[...]ःप्रौढिसम्पन्नःप्रसादात्तस्यचक्रिणः । मानुषा भुवमास्थाय यमंनैव प्रयान्ति ते ॥

[...]द्वेषविनिर्मुक्ताःक्लेशपाशविवर्जिताः । सुखिनोदानपुण्यैश्च सर्वधर्मपरायणाः॥२४॥

[...]स्तारं ते जनाःसर्वे सन्तत्यापि गतानृप । यथादूर्वावटाश्चैव विस्तारं यान्ति भूतले

तथा ते मानवाःसर्वे पुत्रपौत्रैःप्रविस्तृताः ।

मृत्युदोषविहीनास्ते चिरंजीवन्ति वै जनाः ॥ २६ ॥

स्थिरकायाश्च सुखिनो जरारोगविवर्जिताः ।

पञ्चविंशाब्दिकाःसर्वे नरादृश्यन्ति भूतले ॥ २७ ॥

[...]चारपराःसर्वे विष्णुध्यानपरायणः । एवं सर्वेच मर्त्यास्ते प्रसादात्तस्य चक्रिणः

[...]ता मानवाःसर्वे दानभोगपरायणः । मृतो न श्रूयते लोके मर्त्यःकोऽपि नरोत्तम॥

[...]कं नैव प्रपश्यन्ति दोषंनैव प्रयान्ति ते । यद्रूपं स्वर्गलोकस्य तद्रूपंभूतलस्य च॥३०॥

सञ्जातं मानवश्रेष्ठ प्रसादात्तस्य चक्रिणः । विभ्रष्टा यमदूतास्ते विष्णुदूतैश्च त

रुदमानागताःसर्वे धर्मराजं परस्परम् ।

तत्सर्वं कथितं दूतैश्चेष्टितं भूपतेस्तु तैः ॥ ३२ ॥

अमृत्युभूतलंजातं दानभोगेन भास्करे ।

नहुषस्यात्मजेनापि कृतंदेव ययातिना ॥ ३३ ॥

विष्णुभक्तेन पुण्येन स्वर्गरूपं प्रदर्शितम् । एवमाकर्णितंसर्वं धर्मराजेन

धर्मराजस्तदातत्र दूतेभ्यःश्रुतविस्तरः । चिन्तयामास सर्वार्थं श्रुत्वैवं नृप

इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेमातापितृतीर्थवर्णनेययाति

पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्यायः

इन्द्राय ययातिकर्मनिवेदनपुरःसरं ययातेः स्वर्गानयनाय प्रार्थना

सुकर्मोवाच ।

सौरिर्दूतैस्तथासर्वैःसहस्वर्गं जगाम सः । द्रष्टु तत्र सहस्राक्षं देववृन्दैःसमा

धर्मराजं समायान्तं ददर्श सुरराट् तदा । समुत्थाय त्वरायुक्तो दत्त्वाचार्घम

पप्रच्छागमनं तस्य कथयस्व ममाग्रतः । समाकर्ण्य महद्वाक्यं देवराजस्यभा

धर्मराजोऽब्रवीत्सर्वं ययातेश्चरितंमहत् । श्रूयतां देवदेवेश यस्मादागमनं

कथयाम्यहमत्रापि येनाहमागतस्तव । नहुषस्यात्मजेनापि वैष्णवेन महात्म

वैष्णवाश्च कृतामर्त्या ये वसन्ति महीतले । वैकुण्ठस्यसमंरूपं मर्त्यलोकस्य

अमरामानवाजाता जरारोगविवर्जिताः ।

पापमेव न कुर्वन्ति असत्यं न वदन्ति ते ॥ ७ ॥

कामक्रोधविहीनास्ते लोभमोहविवर्जिताः ।

दानशीला महात्मानःसर्वे धर्मपरायणाः ॥ ८ ॥
धर्मैःसमर्चन्ति नारायणमनामयम् । तेन वैष्णवधर्मेण मानवा जगतीतले ॥ ९ ॥
मया वीतशोकाःसर्वे च स्थिरयौवनाः । दुर्वावटा यथादेव विस्तारंयान्ति भूतले
ते विस्तरंप्राप्ताःपुत्रपौत्रैःप्रपौत्रकैः । तेषां पुत्रैःप्रपौत्रैश्च वंशाद्वंशान्तरंगताः॥११॥
हि वैष्णवःसर्वो जरामृत्युविवर्जितः । मर्त्यलोकःकृतस्तेन नहुषस्यात्मजेन वै ॥
पदभ्रष्टोऽस्मि सञ्जातो व्यापारेण विवर्जितः ।
एतत्सर्वं समाख्यातं ममकर्म विनाशनम् ॥ १३ ॥
एवं ज्ञात्वा सहस्राक्ष लोकस्यास्य हितंकुरु ।
एतत्ते सर्वमाख्यातं यथापृष्टोऽस्मि वै त्वया ॥ १४ ॥
एतस्मात्कारणादिन्द्र आगतस्तवसन्निधौ ॥ १५ ॥

इन्द्र उवाच ।

व मयादूत आगमाय महात्मनः । प्रेषितो धर्मराजेन्द्र दूतेनास्यापि भाषितम् ॥
स्वर्गसुखस्यार्थी नागमिष्ये दिवंपुनः । स्वर्गरूपं करिष्यामि सर्वं तद्भुमिमण्डलम्
चचक्षे भूपालःप्रजापाल्यं करोति सः । तस्य धर्मप्रभावेण भीतस्तिष्ठामि सर्वदा

धर्म उवाच ।

केनाप्युपायेन तमानय सुभूपतिम् । देवराज महाभाग यदीच्छसि ममप्रियम् ॥१६॥
आकर्ण्य वचस्तस्य धर्मस्यापि सुराधिपः । चिन्तयामास मेधावी सर्वतत्त्वेनभूपते॥
देवं समाहूय गन्धर्वांश्च पुरन्दरः । मकरन्दं रतिंदेव आनिनाय महामनाः ॥ २१॥
कुरु तवैयूयं यथाऽऽगच्छति भूपतिः । यूयं गच्छन्तु भूलोकं मयादिष्टा न संशयः

काम उवाच ।

योस्तु प्रियंपुण्यं करिष्यामि न संशयः। राजानं पश्य मांचैव स्थितंचैव समायुधि
मुक्त्वा गता सर्वे यत्रराजा स नाहुषि । नटरूपेण ते सर्वे कामाद्याः कर्मणाद्विज ॥
शीर्भिरभिनन्द्यैव ते च ऊचुःसुनाटकम् । तेषां तद्वचनंश्रुत्वा ययातिःपृथिवीपतिः ॥
चकार मेधावी देवरूपांसुपण्डितैः । समायातःस्वयंभूपो ज्ञानविज्ञानकोविदः ॥

तेषां तु नाटकं राजा पश्यमानःसनाहुषिः । चरितं वामनस्यापि उत्पत्तिविप्रकर्म...
रूपेणाप्रतिमालोके सुस्वरं गीतमुत्तमम् ।
गायमाना जराराजन्नार्यारूपेण वै तदा ॥ २८ ॥
तस्यागीतविलासेन हास्येन ललितेन च । मधुरालापतस्तस्य कन्दर्पस्य च मा...
मोहितस्तेनभावेन दिव्येन चरितेन च । बलेश्चैव यथारूपं विन्ध्यावल्या य...
वामनस्य यथारूपं चक्रेमारोथतादृशम् । सूत्रधारःस्वयंकामो वसन्तः पारिपा...
नटीवेष धराजाता सारतिर्हृष्टवल्लभा । नेपथ्यान्तश्चरी राजन्सातस्मिन्नृत्यक...
मकरन्दो महाप्राज्ञःक्षोभयामास भूपतिम् ।
यथायथा पश्यति नृत्यमुत्तमं गीतं समाकर्णति सक्षितीशः ।
तथातथामोहितवान्सभूपतिं नटीप्रणीतेन महानुभावः ॥ ३४ ॥
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने मातापितृतीर्थे ययाति...
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

## सप्तसप्ततितमोऽध्यायः

### नृत्यगीतपरवशतयाऽशौचलेशमात्रेण ययातेः शरीरे जराप्रवेशः

सुकर्मोवाच ।

कामस्य गीतलास्येन हास्येन ललितेन च । मोहितो राजराजेन्द्रो नटरूपेण ...
कृत्वा मूत्रंपुरीषं च सराजा नहुषात्मजः । अकृत्वा पादयोःशौचमासने उपवि...
तदनन्तरं तु सम्प्राप्य सञ्चजार जरानृपम् । कामेनापि नृपश्रेष्ठं इन्द्रकार्यं कृतं...
निवृत्ते नाटकेतस्मिन्गतेषुतेषु भूपतिः । जराभिभूतोधर्मात्मा कामसंसक्त...
मोहितः काममोहेन विह्वलो विकलेन्द्रियः ।



अतीवमुग्धो धर्मात्मा विषयैश्चापवाहितः ॥ ५ ॥

दा तु गतोराजा मृगयाव्यसनातुरः। वने च क्रीडतेसोऽपि मोहरागवशंगतः ॥६॥
संक्रीडमानस्य नृपतेश्च महात्मनः। मृगश्चैकः समायातश्चतुःश्रृङ्गोह्यनौपमः ॥ ७ ॥
ङ्गसुन्दरो राजन्हेमरूप तनुरुहः। रत्नज्योतिः सुचित्राङ्गो दर्शनीयो मनोहरः ॥८॥
धावत्सवेगेन बाणपाणिर्धनुर्द्धर। इत्यमन्यत मेधावी कोऽपिदैत्यःसमागतः ॥
ण च सतेनापि दूरमाकर्षितो नृपः। गतः संरथवेगेन श्रमेण परिखेदितः ॥ १० ॥
माणस्य तस्यापि मृगश्चान्तरधीयत। स पश्यति वनं तत्र नन्दनोपममद्भुतम् ॥
वृक्षसमाकीर्णं भूतपञ्चकशोभितम्। गुरुभिश्चन्दनैः पुण्यैः कदलीखण्डमण्डितैः
शोकपुन्नागैर्नालिकेरैश्च तिन्दुकैः। पूगीफलैश्च खर्जूरैःकुमुदैः सप्तपर्णकैः ॥१३॥
तैः कर्णिकारैश्च नानावृक्षैः सदाफलैः। पुष्पितामोदसंयुक्तैः केतकैः पाटलैस्ततः
माणो महाराजो ददर्श सरउत्तमम्। पुण्योदकेन सम्पूर्णं विस्तीर्णं पञ्चयोजनम्
कारण्डवाकीर्णं जलपक्षिविनादितम्। कमलैश्चापिमुदितं श्वेतोत्पलविराजितम्

रक्तोत्पलैः शोभमानं हाटकोत्पलमण्डितम्।
नीलोत्पलैःप्रकाशितं कह्लारैरतिशोभितम ॥ १७ ॥

मधुकरैश्चापि सर्वत्रपरिनादितम्। एवं सर्वगुणोपेतं ददर्श सरउत्तमम् ॥ १८ ॥
योजनविस्तीर्णं दशयोजनदीर्घकम्। तडागं सर्वतोभद्रं दिव्यभावैरलङ्कृतम् ॥
वेगेन संखिन्नःकिंचिच्छ्रमनिपीडितः। निषसाद तटेतस्य चूतच्छायांसुशीतलाम् ॥
त्वा पीत्वा जलं शीतं पद्मसौगन्ध्यवासितम्। सर्वश्रमोपशमनममृतोपममेवतत् ॥
च्छाये ततस्तस्मिन्नुपविष्टेन भूभृता। गीतध्वनिःसमाकर्णि गीयमानो यथातथा ॥

यथा स्त्रीगायते दिव्या तथायं श्रूयतेध्वनिः।
गीतप्रियो महाराज एवं चिन्तां परांगतः ॥ २३ ॥

ताकुलस्तुधर्मात्मा यावच्चिन्तयतेक्षणम्। तावन्नारीवराकाचित्पीनश्रोणिपयोधरा
तैः पश्यतस्तस्य वनेतस्मिन्समागता। सर्वाभरणशोभाङ्गी शीललक्षणसम्पदा ॥
स्मिन्वनेसमायाता नृपतेः पुरतः स्थिता। तामुवाच महाराजः काहिकस्यभविष्यसि
मर्थं हि समायाता तन्मेत्वं कारणं वद। पृष्टासती तदातेन न किंचिदपि पिप्पल ॥

शुभाशुभं च भूपालं प्रत्यवोचद्वरानना। प्रहस्यैवगताशीघ्रं वीणादण्डकरा
विस्मयेनापि राजेन्द्रोमहताव्यापितस्तदा। मयासम्भाषिताचेयं मां न ब्रूते
पुनश्चिन्ता समापेदे ययातिःपृथिवीपतिः। यो वै मृगो मयादृष्टश्चतुःशृङ्गःसुव
तस्मान्नारी समुद्भूता तत्सत्यं प्रतिभाति मे।
मायारूपमिदं सत्यं दानवानां भविष्यति ॥ ३१ ॥
चिन्तयित्वा क्षणंराजा ययातिर्नहुषात्मजः। यावच्चिन्तयते राजातावन्नारी म
अन्तर्धानंगता विप्र प्रहस्य नृपनन्दनम्। एतस्मिन्नन्तरेगीतं सुस्वरं पुनरेव
शुश्रुवे परमंदिव्यं मूर्छनातानसंयुतम्। जगाम सत्वरं राजा यत्रगीतध्वनिर्महा
जलान्ते पुष्करंचैव सहस्रदलमुत्तमम्।
तस्योपरिवरानारी शीलरूपगुणान्विता ॥ ३५ ॥
दिव्यलक्षणसम्पन्ना दिव्याभरणभूषिता। दिव्यैर्भावैःप्रभात्येका वीणादण्डक
गायन्ती सुस्वरंगीतंतालमानलयान्वितम्। तेनगीतप्रभावेनमोहयन्ती चरा
देवान्मुनिगणान्सर्वान्दैत्यान्गन्धर्वकिन्नरान्।
तां दृष्ट्वा सविशालाक्षीं रूपतेजोपशालिनीम् ॥ ३८ ॥
संसारेनास्तिचैवान्या नारीदृशीचराचरे। पुरानटो जरायुक्तो नृपतेःकायमेव हि
सञ्चारितो महाकामस्तदासौ प्रकटोऽभवत्।
घृतंस्पृष्ट्वा यथावह्नी रश्मिवान्सम्प्रजायते ॥ ४० ॥
तां च दृष्ट्वा तथाकामस्तत्कायात्प्रकटोऽभवत्।
मन्मथाविष्टचित्तोऽसौ तां दृष्ट्वा चारुलोचनाम् ॥ ४१ ॥
ईदृग्रूपा न दृष्टा मे युवतीविश्वमोहिनी। चिन्तयित्वाक्षणं राजा कामसंसक्त
तस्याःसविरहेणापि लुब्धोऽभून्नृपतिस्तदा। कामाग्निनादह्यमानःकामज्वरेण
कथंस्यान्मम चैवेयं कथंभावो भविष्यति।
यदा मां गूहते बाला पद्मास्यो पद्मलोचना ॥ ४४ ॥
यदीयं प्राप्यते मर्हि सफलंजीवितं भवेत्। एवंविचिन्त्य धर्मात्मा ययातिःपृथिवी

तामुवाच वरारोहा कात्वं कस्यापि वा शुभे।
पूर्वंदृष्टा तु या नारी साद्दृष्टा पुनरेव च॥ ४६॥
प्रच्छ सधर्मात्मा कान्वेयं तवपार्श्वगा। सर्वंकथय कल्याणि अहं हि नहुषात्मजः
वंशप्रसूतोऽहं सप्तद्वीपाधिपःशुभे। ययातिर्नाम मे देविख्यातोऽहं भुवनत्रये॥
सङ्गमनेचेतो भावमेवं प्रवाञ्छते। देहि मे सङ्गमं भद्रे कुरु सुप्रियमेव हि॥ ४९॥
हि वाञ्छसे भद्रे तद्ददामि न संशयः। दुर्जयेनापि कामेन हतोऽहं वरवर्णिनि॥
तस्मात्त्राहि सुदीनं मां प्रपन्नं शरणं तव।
राज्यं च सकलामुर्वीं शरीरमपि चात्मनः॥ ५१॥
तवदास्यामि त्रैलोक्यमिदमेव ते। तस्य राज्ञोवचःश्रुत्वा सास्त्री पद्मनिभानना
लां स्वसखींप्राह ब्रूहि राजानमागतम्। नामचोत्पत्तिस्थानं च पितरंमातरं शुभे
ममापि भावमेकाग्रमस्याग्रे च निवेदय।
तस्याश्च वाञ्छितं ज्ञात्वा विशाला भूपतिं तदा॥ ५४॥
उवाच मधुरालापैःश्रूयतां नृपनन्दन॥ ५५॥

विशालोवाच।

पुरादग्धो देवदेवेन शम्भुना। रुरोद सारतिर्दुःखाद्भर्त्राहीनाऽपि सुस्वरम्॥
सरसि राजेन्द्र सारतिर्न्यवसत्तदा। तस्यप्रलापमेवं सा सुस्वरं करुणान्वितम्॥
कर्ण्य ततोदेवाःकृपया परयान्विताः। सञ्जाता राजराजेन्द्र शङ्करंवाक्यमब्रुवन्॥
स्व महादेव पुनरेव मनोभवम्। वराकीयं महाभाग भर्तृहीनाहि कीदृशी॥५९॥
कामेनापि समायुक्तामस्मत्स्नेहात्कुरुष्व हि।
तच्छ्रुत्वा च वचःप्राह जीवयामि मनोभवम्॥ ६०॥
पि विहीनोऽयं पञ्चबाणोमयोभवः। भविष्यति न सन्देहो माधवस्य सखापुनः
पिशरीरेण वर्तयिष्यति नान्यथा। महादेव प्रसादाच्च मीनकेतुःसजीवितः॥
भिनन्द्यैवं देव्याःकामं नरोत्तम। गच्छकाम प्रवर्तस्व प्रिययासह नित्यशः॥
महातेजाःस्थिति संहारकारकः। पुनःकामःसरःप्राप्तो यत्रास्ते दुःखितारतिः॥

इदं कामसरो राजन्रतिरत्र सुसंस्थिता। दग्धेसति महाभागे मन्मथे दुःखशो
रत्याःकोपात्समुत्पन्नःपावको दारुणाकृतिः। अतीवदग्धा तेनापि सारतिर्मोहमूर्छि

अश्रुपातं मुमोचाथ भर्तृहीना नरोत्तम।
नेत्राभ्यां हि जलेतस्याःपतिता अश्रुबिन्दवः ॥ ६७ ॥

तेभ्योजातो महाशोकःसर्वसौख्यप्रणाशकः। जरापश्चात्समुत्पन्ना अश्रुभ्यो नृपस
वियोगोनाम दुर्मेधास्तेभ्योजज्ञे प्रणाशकः। दुःखसन्तापकौचोभौ जज्ञाते दारु

मूर्छानाम ततोजज्ञे दारुणा सुखनाशिनी।
शोकाज्जज्ञे महाराज कामज्वरोऽथ विभ्रमः ॥ ७० ॥

प्रलापो विह्वलश्चैव उन्मादो मृत्युरेव च। तस्याश्च अश्रुबिन्दुभ्यो जज्ञिरे विभ्र
रत्याःपार्श्वे समुत्पन्नाःसर्वेतापाङ्गधारिणः। मूर्तिमन्तो महाराज सद्भावगुणसं
कामएषसमायातःकेनाप्युक्तं तदानृप। महानन्देनसंयुक्ता दृष्ट्वा कामं सम
नेत्राभ्यामश्रुपूर्णाभ्यां पतिता अश्रुबिन्दवः। अप्सुमध्ये महाराज चापल्याज्जज्ञि

प्रीतिर्नाम तदाजज्ञे ख्यातिर्लज्जा नरोत्तमः।
तेभ्योजज्ञे महानन्दःशान्तिश्चान्या नृपोत्तम ॥ ७५ ॥

जज्ञाते द्वेशुभेकन्ये सुखसम्भोगदायिके। लीलाक्रीडा मनोभाव संयोगस्तु मह
रत्यास्तु वामनेत्राद्वै आनन्दादश्रुबिन्दवः। जलान्ते पतिताराजंस्तस्माज्जज्ञे

तस्मात्सुपङ्कजाज्जाता इयंनारी वरानना।
अश्रुबिन्दुमतीनाम रतिपुत्री नरोत्तम ॥ ७८ ॥

तस्याःप्रीत्या सुखंकृत्वा नित्यंवर्त्ते समीपगा। सखीभावस्वभावेन संहृष्टा स

विशालानाम मेख्यातं वरुणस्यसुता नृप।
अस्याश्चान्ते प्रवर्तामि स्नेहात्स्निग्धास्मि सर्वदा ॥ ८० ॥

एतत्ते सर्वमाख्यातमस्याश्चात्मन एव ते। तपश्चचार राजेन्द्र पतिकामा वरा

राजोवाच।

सर्वमेव त्वयाऽऽख्यातं मयाज्ञातं शुभे शृणु। मामेवं हि भजत्वेषा रतिपुत्री व

यमेषा वाञ्छतेबाला तत्सर्वं तु ददाम्यहम् ।
तथा कुरुष्व कल्याणि यथामे वश्यतां व्रजेत् ॥ ८३ ॥

विशालोवाच ।

...व्रतं प्रवक्ष्यामि तदाकर्णय भूपते । पुरुषं यौवनोपेतं सर्वज्ञं वीरलक्षणम् ॥८४॥
...जसमं राजन्धर्माचार समन्वितम् । तेजस्विनं महाप्राज्ञं दातारं यज्विनांवरम् ॥
गुणानां धर्मभावस्य ज्ञातारं पुण्यभाजनम् ।
लोकइन्द्रसमं राजन्सुयज्ञैर्धर्मतत्परम् ॥ ८६ ॥
...र्यसमोपेतं नारायणमिवापरम् । देवानां सुप्रियं नित्यं ब्राह्मणानामतिप्रियम् ॥
...ण्यं वेदतत्त्वज्ञं त्रैलोक्येख्यातविक्रमम् । एवंगुणैःसमुपेतं त्रैलोक्येन प्रपूजितम् ॥
सुमतिं सुप्रियंकान्तं मनसावरमीप्सति ॥ ८९ ॥

ययातिरुवाच ।

...गुणैःसमुपेतं विद्धि मामिहचागतम् । अस्यानुरूपोभर्त्ताहं सृष्टोधात्रा न संशयः ॥

विशालोवाच ।

...त्वं पुण्यसंवृद्धं जानेराजञ्जगत्त्रये । पूर्वोक्ता ये गुणाःसर्वे मयोक्ताःसन्ति ते त्वयि
...नापि च दोषेण त्वामेषा हि न मन्यते । एष मे संशयोजातो भवान्विष्णुमयो नृप

ययातिरुवाच ।

समाचक्ष्व महादोषं यमेषा नानुमन्यते ।
तत्त्वेन चारुसर्वाङ्गी प्रसाद सुमुखीभव ॥ ९३ ॥

विशालोवाच ।

...दोषं न जानासि कस्मात्त्वं जगतीपते । जरया व्याप्तकायस्त्वमनेनेयं न मन्यते ॥
...त्वा महद्वाक्यमप्रियं जगतीपतिः । दुःखेन महताविष्टस्तामुवाच पुनर्नृपः ॥९५॥
जरादोषो न मे भद्रे संसर्गात्कस्यचित्कदा ।
समुद्भूतं ममाङ्गे वै तं न जाने जरागमम् ॥ ९६ ॥
...हि वाञ्छते चैषा त्रैलोक्ये दुर्लभं शुभे । तमस्यैदातुकामोऽहं व्रियतां वरउत्तमः ॥

विशालोवाच ।

जराहीनो यदास्यास्त्वं तदा ते सुप्रियाभवेत् ।
एतद्विनिश्चितं राजन्सत्यंसत्यं वदाम्यहम् ॥ ९८ ॥

श्रुतिरेवं वदेद्राजन्पुत्रे भ्रातरिभृत्यके । जरासङ्क्रम्यते यस्य तस्याङ्गे परिस[illegible]तुर
तारुण्यं तस्य वैगृह्य तस्मैदत्त्वा जरांपुनः । उभयोःप्रीतिसंवादःसुरुच्या जायते
तथात्मदानपुण्यस्य कृपया यो ददाति च ।
फलं राजन्हि तत्तस्य जायते नात्रसंशयः ॥ १०१ ॥

दुःखेनोपार्जितं पुण्यमन्यस्मै हि प्रदीयते । सुपुण्यंतद्भवेत्तस्य पुण्यस्य फलम[illegible]की
पुत्रायदीयतां राजंस्तस्मात्तारुण्यमेव च । प्रगृह्यैव समागच्छ सुन्दरत्वेन[illegible]जन
यदात्वमिच्छसेभोक्तुं तदात्वं कुरुभूपते । एवमाभाष्य साभूपं विशाला वि[illegible]गृ

सुकर्मोवाच ।

एवमाकर्ण्य राजेन्द्रो विशालामवदत्तदा ॥ १०५ ॥

राजोवाच ।

एवमस्तु महाभागे करिष्ये वचनं तव । कामासक्तस्य मूढस्तु ययातिःपृथिवी[illegible]
गृहंगत्वा समाहूय सुतान्वाक्यमुवाच ह । तुरुंपूरुंकुरुं राजा यदुं च पितृवत्
कुरुध्वं पुत्रकाःसौख्यं यूयं हि ममशासनात् ।

पुत्राऊचुः ।

पितृवाक्यं प्रकर्तव्यं पुत्रैश्चापि शुभाशुभम् । उच्यतां तात तच्छीघ्रं कृतंविद्धि [illegible]
एवमाकर्ण्य तद्वाक्यं पुत्राणांपृथिवीपतिः । आचचक्षे पुनस्तेषु हर्षेणाकुल[illegible]
इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने मातापितृतीर्थवर्णने यया[illegible]
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

## अष्टसप्ततितमोऽध्यायः

तुराज्ञांश्रुत्वा त्रिभिःपुत्रैस्तदाज्ञाप्रत्याख्याने ययातिनातान्प्रतिशापदानम् ।

ययातिरुवाच ।

एकेन गृह्यतां पुत्रा जरा मे दुःखदायिनी ।

धीरेण भवतांमध्ये तारुण्यं ममदीयताम् ॥ १ ॥

कीयं हि महाभागाःस्वरूपमिदमुत्तमम् । सन्तप्तं मानसंमेऽद्यस्त्रियांसक्तंसुचञ्चलम्

जनस्था यथापश्च आवर्त्तयति पावकः । तथामे मानसं पुत्राःकामानलसुचालितम् ॥

कोगृह्णातु मे पुत्रा जरांदुःखप्रदायिनीम् । स्वकं ददातु तारुण्यं यथाकामंचराम्यहम्

मे जरापसरणं करिष्यति सुतोत्तमः । स च मे भोक्ष्यतेराज्यं धनुर्वंशं धरिष्यति ॥

सौख्यं सुसम्पत्तिर्धनंधान्यंभविष्यति । विपुलोसन्ततिस्तस्ययशःकीर्तिर्भविष्यति

पुत्राऊचुः ।

धर्मपरो राजन्प्रजासत्येनपालकः । कस्मात्तेहीदृशोभावो जातःप्रकृतिचापलः ॥

राजोवाच ।

गतानर्तकाःपूर्वं पुरंमे हि प्रनर्तकाः । तेभ्यो मे कामसंमोहे जातोमोहश्च ईदृशः ॥

याव्यापितःकायो मन्मथाविष्टमानसः । सम्बभूव सुतश्रेष्ठाःकामेन च समाकुलः ॥

चिद्दृष्टा मयानारी दिव्यरूपावरानना । मयासम्भाषितापुत्राःकिंचन्नोवाचमांसती

विशालानाम तस्याश्च सखीचारुविचक्षणा ।

सामामाह शुभंवाक्यं मम सौख्यप्रदायकम् ॥ ११ ॥

हीनो यदास्यास्त्वं तदाते सुप्रियाभवेत् । एवमङ्गीकृतं वाक्यं तयोक्तं गृहमागतः

जरापनोदार्थं तदेवं समुदाहृतम् । एवंज्ञात्वा प्रकर्तव्यं मत्सुखं हि सुपुत्रकाः ॥

तुरुरुवाच ।



रं प्राप्यते पुत्रैःपितुर्मातुःप्रसादतः । धर्मश्च क्रियते राजञ्छरीरेण विपश्चिता ॥

पित्रोःशुश्रूषणंकार्यं पुत्रैश्चापि विशेषतः । न च यौवनदानस्य कालोऽयं मे नृप
प्रथमेवयसि भोक्तव्यं विषयं मानवैर्नृप ।
इदानीं तन्नकालोऽयं वर्तते तवसाम्प्रतम् ॥ १६ ॥
जरां तातप्रदत्त्वा वै पुत्रेतातमहद्गताम् । पश्चात्सुखं प्रभोक्तव्यं न तुस्यात्तवभूपते
तस्माद्वाक्यं महाराज करिष्येनैव ते पुनः । एवमाभाषत नृपं तुरुर्ज्येष्ठसुत
तुरोवाक्यं तु तच्छ्रुत्वा क्रुद्धोराजा बभूवसः ।
तुरुंशशाप धर्मात्मा क्रोधेनारुणलोचनः ॥ १६ ॥
अपध्वस्तस्त्वयाऽऽदेशो ममायंपापचेतन । तस्मात्पापीभवस्वत्वं सर्वधर्मविहीन
शिखयात्वंविहीनश्च वेदशास्त्रविवर्जितः । सर्वाचारविहीनस्त्वं भविष्यसि न
ब्रह्मघ्नस्त्वं देवदुष्टःसुरापःसत्यवर्जितः । चण्डकर्मप्रकर्तात्वं भविष्यसि न
सुरालीनःक्षुधीपापी गोघ्नश्च त्वं भविष्यसि ।
दुश्चर्मामुक्तकच्छश्च ब्रह्मद्वेष्टा निराकृतिः ॥ २३ ॥
परदाराभिगामित्वं महाचण्डःप्रलम्पटः । सर्वभक्षश्च दुर्मेधाःसदात्वं च भवि
सगोत्रां रमसेनारीं सर्वधर्मप्रणाशकः । पुण्यज्ञानविहीनात्मा कुष्ठवांश्च भवि
तवपुत्राश्च पौत्राश्च भविष्यन्ति न संशयः ।
ईदृशाःसर्वपुण्यघ्ना म्लेच्छाःसुकलुषीकृताः ॥ २६ ॥
एवं तुरुंसुशप्त्वैव यदुं पुत्रमथाब्रवीत् । जरां वैधारयस्वेह भुङ्क्ष्वराज्यमक
बद्धाञ्जलिपुटोभूत्वा यदू राजानमब्रवीत् । जराभारं नशक्नोमि वोढुं तात
शीतमध्वाकदन्नं च वयोऽतीताश्च योषितः ।
मनसःप्रातिकूल्यं च जरायाःपञ्चहेतवः ॥ २६ ॥
जरादुःखं न शक्नोमि नवेवयसि भूपते । कःसमर्थो हि वै धर्तुं क्षमस्वत्वं भ
यदुं क्रुद्धोमहाराजःशशाप द्विजनन्दन । राजर्हो न च तेवंशःकदाचिद्वै भवि
बलतेजःक्षमाहीनःक्षात्रधर्म विवर्जितः ।
....भविष्यति न सन्देहो मच्छासन पराङ्मुखः ॥ २९ ॥

यदुरुवाच ।

पोऽहं महाराज कस्माच्छप्तस्त्वयाधुना । कृपांकुरुष्व दीनस्य प्रसादसुमुखो भव

राजोवाच ।

देवःकुले ते वै स्वांशेनापि हि पुत्रकः । करिष्यति विसृष्टिं च तदापूतं कुलं तव ॥

यदुरुवाच ।

पुत्रो महाराज निर्दोषःशापितस्त्वया । अनुग्रहो दीयतां मे यदिमेवर्त्ततेदया ॥

राजोवाच ।

भवेज्ज्येष्ठपुत्रस्तु पितुर्दुःखापहारकः । राज्यदायं सभुङ्क्ते च भारवोढा भवेत्सहि

धर्मं न प्रवृत्तमभाष्योऽसि न संशयः । भवतानाशिताज्ञा मे महादण्डेनघातिन

तस्मादनुग्रहोनास्ति यथेष्टं च तथाकुरु॥ ३८ ॥

यदुरुवाच ।

न्मे नाशितंराज्यं कुलंरूपं त्वयानृप । तस्माद्दुष्टो भविष्यामि तववंशपतिर्नृप ॥

शे भविष्यन्ति नानाभेदास्तु क्षत्रियाः । तेषांग्रामान्सुदेशांश्च स्त्रियोरत्नानियानिवै

भोक्ष्यन्ति च न सन्देहो अतिचण्डा महाबलाः ।

मम वंशात्समुत्पन्नास्तुरुष्का म्लेच्छरूपिणः ॥ ४१ ॥

ये नाशिताः सर्वे सप्ताःशापैःसुदारुणैः । एवं बभाषे राजानं यदुःक्रुद्धो नृपोत्तम

क्रुद्धो महाराजः पुनश्चैवं शशापह । मत्प्रजानाशकाः सर्वे वंशजास्ते शृणुष्व हि ॥

चन्द्रश्च सूर्यश्च पृथ्वीनक्षत्रतारकाः । तावन्म्लेच्छाः प्रपक्ष्यन्ते कुम्भापाके च रौरवे

दृष्ट्वा ततोवालं क्रीडमानं सुलक्षणम् । समाह्वयति तं राजा न सुतं नृपनन्दनः

ज्ञात्वा परित्यक्तःसकुरुस्तेन वै तदा । शर्मिष्ठायाःसुतंपुण्यं तं पूरुं जगदीश्वरः ॥

हूय वभाषे च जरामे गृह्यतापुनः । भुङ्क्ष्वराज्यं मयादत्तं सुपुण्यं हतकण्टकम् ॥

पूरुरुवाच ।

देवेनभोक्तव्यं पित्राभुक्तं यथातव । त्वदादेशं करिष्यामि जरा मे दीयतां नृप ॥

तारुण्येन ममाद्यैव भूत्वा सुन्दररूपधृक् ।

भुङ्क्ष्व भोगान्सुकर्माणि विषयासक्तचेतनः ॥ ४६ ॥

यावदिच्छा महाभाग विहरस्व तयासह । यावज्जीवाम्यहं तात जरांतावद्धरा

एवमुक्तस्तु तेनापि पूरुणा जगतीपतिः । हर्षेणमहताविष्टस्तंपुत्रं प्रत्युवाच सः

यस्माद्वत्स ममाज्ञा वै नहता कृतवानिह । तस्मादहं विधास्यामि बहुसौख्य

यस्माज्जरागृहीता मे दत्तं तारुण्यकं स्वकम् ।

तेनराज्यं प्रभुङ्क्ष्वत्वं मयादत्तं महामते ॥ ५३ ॥

एवमुक्तःसपूरुश्च तेनराज्ञा महीपते । तारुण्यं दत्तवानस्मै जग्राहास्माज्जरां

ततःकृते विनिमये वयसोस्तातपुत्रयोः । तस्माद्वृद्धतरःपूरुःसर्वाङ्गेषु व्यदृ

नूतनत्वं गतोराजा यथाषोडशवार्षिकः । रूपेणमहताविष्टो द्वितीयइवमन्मथः

धनूराज्यं च छत्रं च व्यजनंचासनं गजम् । कोशंदेशंबलंसर्वं चामरंस्यन्दनं

ददौ तस्य महाराजःपूरोश्चैव महात्मनः । कामासक्तश्च धर्मात्मा तां नारीमनु

तत्सरःसागरप्रख्यं कामाख्यं नहुषात्मजः । अश्रुबिन्दुमतीयत्र जगाम ल

तांदृष्ट्वा तु विशालाक्षीं चारुपीनपयोधराम् । विशालां च महाराजकन्दर्पा

राजोवाच ।

आगतोऽस्मि महाभागे विशालेचारुलोचने । जरात्यागःकृतोभद्रे तारुण्येनस

युवाभूत्वा समायातो भवत्वेषा ममाधुना ।

यं यं हि वाञ्छतेचैषा तं तं दद्मि न संशयः ॥ ६२ ॥

विशालोवाच ।

यदाभवान्समायातो जरांदुष्टां विहाय च । दोषेणैकेनलिप्तोऽसि भवन्तं नै

राजोवाच ।

ममदोषं वदस्वत्वं यदिजानासि निश्चितम् । तं तु दोषंपरित्यक्ष्ये गुणरूपं

इति श्रीपाद्मपुराणे द्वितीये भूमिखण्डे वेनोपाख्याने मातापितृतीर्थव

ययातिचरितं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

# एकोनाशीतितमोऽध्यायः

तिनात्वन्मनोरथान्पूरयिष्यामीतिप्रतिज्ञांकृत्वातयासहगान्धर्वविवाहेनवरणम

विशालोवाच ।

ष्ठा यस्य वै भार्या देवयानी वरानना । सौभाग्यं तत्र वै दृष्टमन्यथानास्ति भूपते॥

थं त्वं महाभाग अस्याःकार्यवशोभवेः । सपत्नजेनभावेन भवान्भर्ताप्रतिष्ठितः ॥

ससर्पोऽसि महाराज भूतले चन्दनं यथा ।

सर्पैश्चवेष्टितो राजन्महाचन्दन एव हि ॥ ३ ॥

त्वं वेष्टितःसर्पैःसपत्नीसंज्ञकैर्नृप । वरमग्निप्रवेशश्च शिखाग्रात्पतनं वरम् ॥ ४ ॥

जःसमायुक्तं सपत्नीसहितं प्रियम् । न वरं तादृशं कान्तं सपत्नीविषसंयुतम् ॥५॥

तस्मान्नमन्यते कान्तं भवन्तं गुणसागरम् ॥ ६ ॥

राजोवाच ।

न्यानमेकार्यं शर्मिष्ठया वरानने । इत्यर्थं पश्य मेकोशं सत्त्वधर्मसमन्वितम् ॥७॥

अश्रुबिन्दुमत्युवाच ।

ज्यस्यभोक्त्री च तवकायस्य भूपते । यद्यद्वदाम्यहं भूप तत्तत्कार्यं त्वयाध्रुवम्

र्यं ममदेहि स्वंकरं त्वं धर्मवत्सल । बहुधर्मसमोपेतं चारुलक्षणसंयुतम् ॥ ६ ॥

राजोवाच ।

भार्यां नविन्दामि त्वांविना वरवर्णिनि । राज्यं च सकलामुर्वींममकार्यं वरानने

सकोशंभुङ्क्ष्व चार्वङ्गि एषदत्तःकरस्तव ।

यदेवभाषसे भद्रे तदेवं तु करोम्यहम् ॥११॥

अश्रुबिन्दुमत्युवाच ।

अनेनापि महाभाग तवभार्या भवाम्यहम् ।



एवमाकर्ण्य राजेन्द्रो हर्षव्याकुललोचनः ॥ १२ ॥

गान्धर्वेणविवाहेन ययातिः पृथिवीपतिः । उपयेमेसुतांपुण्यां मन्मथस्य नरोत्तमः
तयासार्द्धं महात्मा वै रमते नृपनन्दनः । सागरस्य च तीरेषु वनेषूपवनेषु च ।
पर्वतेषु च रम्येषु सरित्सु च तयासह । रमते राजराजेन्द्रस्तरुण्येन महीपतिः ।
एवं विंशत्सहस्राणि गतानि निरतस्य च । भूपस्य तस्यराजेन्द्र ययातेस्तु महा

विष्णुरुवाच ।

एवं तया महाराजो ययातिर्मोहितस्तदा । कन्दर्पस्यप्रपञ्चेन इन्द्रस्यार्थे महामते

सुकर्मोवाच ।

एवं पिप्पलराजासौ ययातिःपृथिवीपतिः । तस्यामोहेनकामेन रतेनललितेन च
न जानाति दिनंरात्रिं मुग्धःकामस्य कन्यया । एकदामोहितं भूपं ययातिं काम

उवाच प्रणतं नम्रं वशगं चारुलोचना ।

अश्रुबिन्दुमत्युवाच ।

सञ्जातं दोहदंकान्त तन्मे कुरु मनोरथम् । अश्वमेधं मखश्रेष्ठं यजस्व पृथिवीपते

राजोवाच ।

एवमस्तु महाभागे करोमि तवसुप्रियम् । समाहूय सुतश्रेष्ठं राज्यभोगे विनिः
समाहूतःसमायातो भक्त्यानमितकन्धरः । बद्धाञ्जलिपुटोभूत्वा प्रणाममकरो
तस्याःपादौ ननामाथ भक्त्यानमितकन्धरः । आदेशोदीयतां राजन्येनाहूतःसमा

किंकरोमि महाभाग दासस्ते प्रणतोऽस्मि च ॥ २४ ॥

राजोवाच ।

अश्वमेधस्य यज्ञस्य सन्भारंकुरु पुत्रक । समाहूय द्विजान्पुण्यानृत्विजो भूमि
एवमुक्तो महातेजाःपूरुःपरमधार्मिकः । सर्वं चकार सम्पूर्णं यथोक्तं तु महात्म

तयासार्धं स जग्राह सुदीक्षां कामकन्यया ।

अश्वमेधयज्ञवाटे दत्त्वा दानान्यनेकधा ॥ २७ ॥

ब्राह्मणेभ्यो महाराज भूरिदानमनन्तकम् । दीनेषु च विशेषेण ययातिःपृथिवी
यज्ञान्ते च महाराजस्तामुवाच वराननाम् । अन्यत्ते सुप्रियंबाले किंकरोमि वद

तत्सर्वं देवि कर्तास्मि साध्यासाध्यं वरानने ॥ २९ ॥

सुकर्मोवाच ।

[ज्ञा]तेन साराज्ञा भूपालंप्रत्युवाच ह । जातोमे दोहदोराजंस्तत्कुरुष्व ममानघ ॥३०॥
[इन्द्रलो]कं ब्रह्मलोकं शिवलोकं तथैव च । विष्णुलोकं महाराज द्रष्टुमिच्छामि सुप्रियम्
[...]स्व महाभाग यदहं सुप्रिया तव । एवमुक्तस्तयाराजा तामुवाच ससुप्रियाम् ॥

साधुसाधु वरारोहे पुण्यमेव प्रभाषसे ।
स्त्रीस्वभावाच्च चापल्यात्कौतुकाच्च वरानने ॥ ३३ ॥

[...]कं महाभागे तदसाध्यं विभाति मे । तत्साध्यं पुण्यदानेन यज्ञेनतपसापि च ॥
[...]या न भवेत्साध्ययत्त्वयोक्तंवरानने । असाध्यं तु भवत्या वै भाषितंपुण्यमिश्रितम्
[...]लोकाच्छरीरेण अनेनापि च मानवः । सुतोदृष्टो न मेऽद्यापि गतःस्वर्गं सुपुण्यकृत्
[...]साध्यं वरारोहे यत्त्वयाभाषितं मम । अन्यदेवकरिष्यामि प्रियं ते तद्वदप्रिये ॥

देव्युवाच ।

[...]मानुषै राजन्नसाध्यंस्यान्नसंशयः । त्वयिसाध्यं महाराज सत्यंसत्यं वदाम्यहम्
[...]यशसाक्षात्रैर्दानैर्यज्ञैश्च भूपते । नास्तिभवादृशश्चान्यो मर्त्यलोके च मानवः ॥
[...]लंसुतेजश्च त्वयिसर्वं प्रतिष्ठितम् । तस्मादेवं प्रकर्तव्यं मत्प्रियं नहुषात्मज ॥
[इति श्री]श्री पाद्मपुराणे द्वितीयेभूमिखण्डेवेनोपाख्यानेमातापितृतीर्थवर्णनेययातिचरित्रे
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

## अशीतितमोऽध्यायः ।

### शर्मिष्ठादेवयान्योर्वर्तनवर्णनम् ।

पिप्पल उवाच ।



[...]न्यां यदाराज्ञ उपयेमे द्विजोत्तम । किंचक्राते तदातेद्वे पूर्वभार्ये सुपुण्यके ॥ १ ॥

देवयानी महाभागा शर्मिष्ठावार्षपर्वणी। तयोश्चरित्रं तत्सर्वं कथयस्व ममा

सुकर्मोवाच।

यदानीता कामकन्या स्वगृहं तेन भूभुजा। अत्यर्थं स्पर्धते सा तु देवयानी
तस्यार्थे तु सुतौशप्तौ क्रोधेनकुलितात्मना। शर्मिष्ठां च समाहूय शब्दंचक्रे
रूपेण तेजसादानैःसत्यपुण्यव्रतैस्तथा। शर्मिष्ठा देवयानी च स्पर्धेतेस्म तया

दुष्टभावं तयोश्चापि साऽज्ञासीत्कामजा तदा।
राज्ञे सर्वंतया विप्र कथितं तत्क्षाणादिह॥ ६॥

अथक्रुधो महाराजःसमाहूयाब्रवीद्यदुम्। शर्मिष्ठावध्यतांगत्वा शुक्रपुत्री तथा
सुप्रियंकुरु मे वत्स यदिश्रेयो हि मन्यसे। एवमाकर्ण्य तत्तस्य पितुर्वाक्यं
प्रत्युवाच नृपेन्द्रं तं पितरंप्रति मानद। नाहंतु घातयेतात मातरौदोषवर्जि
मातृघाते महादोषःकथितो वेदपण्डितैः। तस्माद्घातं महाराज एतयोर्न क
दोषाणां तु सहस्रेण मातालिप्ता यदा भवेत्। भगिनी च महाराज दुहिता च
पुत्रैर्वा भ्रातृभिश्चैव नैववध्या भवेत्कदा। एवंज्ञात्वा महाराज मातरौनैव
यदोर्वाक्यं तदाश्रुत्वा राजाक्रुद्धो बभूवह। शशाप तं सुतं पश्चाद्ययातिःपृथि

यस्मादाज्ञाहतात्वद्य त्वया पापिसमोऽपि हि।
मातुरंशं भजस्व त्वं मच्छाप कलुषीकृतः॥ १४॥

एवमुक्त्वा यदुं पुत्रं ययातिःपृथिवीपतिः। पुत्रंशप्त्वा महाराजस्तयासार्द्धं
रमते सुखभोगेन विष्णोर्ध्यानेनतत्परः। अश्रुबिन्दुमती सा च तेनसार्द्धं
बुभुजेचारुसर्वाङ्गी पुण्यान्भोगान्मनोऽनुगान्। एवंकालोगतस्तस्य ययाते

अक्षयानिर्जराःसर्वा अपरास्तु प्रजास्तथा।
सर्वेलोका महाभाग विष्णुध्यानपरायणाः॥ १८॥

तपसा सत्यभावेन विष्णोर्ध्यानेन पिप्पल। सर्वेलोका महाभागसु खिनः
इतिश्री पाद्मपुराणे द्वितोयेभूमिखण्डेवेनोपाख्यानेमातापितृतीर्थवर्णनेयया



ऽशीतितमोऽध्यायः॥ ८०॥

## एकाशीतितमोऽध्यायः

### इन्द्राज्ञयामेनिकाप्सरसोऽश्रुविन्दुमतींप्रत्यागमनम् ।

सुकर्मोवाच ।

द्रोऽसौ महाप्राज्ञःसदाभीतो महात्मनः । ययातेर्विक्रमंदृष्ट्वा दानपुण्यादिकंवहु॥
ां प्रेषयामास अप्सरां दूतकर्मणि । गच्छभद्रे महाभागे ममादेशं वदस्व हि॥ २ ॥
कन्यामितोगत्वा देवराज वचोवद । येनकेनाप्युपायेन राजानं त्वमिहानय ॥ ३ ॥
एवंश्रुत्वा गतासा च मेनका तत्रप्रेषिता ।
समाचष्ट तु तत्सर्वं देवराजस्य भाषितम् ॥ ४ ॥
का गतासा च मेनका तत्प्रचोदिता । गतायां मेनकायां तु रतिपुत्री मनस्विनी
नां धर्मसङ्केतं प्रत्युवाच यशस्विनी । राजंस्त्वयाहमानीता सत्यवाक्येन वै पुरा॥
ल्वान्सरैदत्तो भवनं च समाहृता । यद्यद्वदाम्यहं राजंस्तत्तत्कार्यं हि वै त्वया ॥
तदेवं हि त्वयावीर नकृतं भाषितं मम ।
त्वामेवं तु परित्यक्ष्ये यास्यामि पितृमन्दिरम् ॥ ८ ॥

राजोवाच ।

कं हि त्वयाभद्रे तत्तेकर्त्ता न संशयः । असाध्यं तु परित्यज्य साध्यंदेवि वदस्वमे

अश्रुबिन्दुमत्युवाच ।

य महीकान्त भवानिह मयावृतः । सर्वलक्षणसम्पन्नःसर्वधर्मसमन्वितः ॥ १० ॥
ाध्यमितिज्ञात्वा सर्वधर्तारमेव च । कर्त्तारं सर्वधर्माणां स्रष्टारं पुण्यकर्मणाम् ॥
त्रैलोक्यसाधकंज्ञात्वा त्रैलोक्यऽप्रतिमं च वै ।
विष्णुभक्तमहंजाने वैष्णवानां महावरम् ॥ १२ ॥
यामयाभर्त्ता भवानङ्गीकृतः पुरा । यस्यविष्णुप्रसादोऽस्ति स सर्वत्र परिव्रजेत्
नास्ति राजेन्द्र त्रैलोक्ये सचराचरे । सर्वेष्वेवसुलोकेषु विद्यते तवसुव्रत ॥१४॥

विष्णोश्चैव प्रसादेन गगनेगतिरुत्तमा । मर्त्यलोकं समासाद्य त्वयैव
जरापलितहीनास्तु मृत्युहीनाजनाःकृताः । गृहद्वारेषु सर्वेषु मर्त्यानां च
कल्पद्रुमा अनेकाश्च त्वयैव परिकल्पिताः ।
एषांगृहेषु मर्त्यानां मुनयःकामधेनवः ॥ १७ ॥
त्वयैवप्रेषिता राजन्स्थिरीभूताःसदाकृताः । सुखिनःसर्वकामैश्च मानवाश्च
गृहैकमध्ये साहस्रं कुलीनानां प्रदृश्यते । एवं वंशविवृद्धिश्च मानवानां
यमस्यापि विरोधेन इन्द्रस्य च नरोत्तम । व्याधिपापविहीनस्तु मर्त्यलोक
स्वतेजसाऽहङ्कारेण स्वर्गरूपं तु भूतलम् ।
दर्शितं हि महाराज त्वत्समोनास्ति भूपतिः ॥ २१ ॥
नरोनैव प्रसूतो हि नोत्पत्स्यति भवादृशः । भवन्तमित्यहंजाने सर्वधर्मप्रभाव
तस्मान्मयाकृतोभर्ता वदस्वैवं ममाग्रतः । नर्ममुक्त्वा नृपेन्द्रत्वं वदसत्यं
यदि ते सत्यमस्तीह धर्मश्चास्ति नराधिप । देवलोकेषु मे नास्ति गगने
सत्यं त्यक्त्वा यदा च त्वं नैव स्वर्गं गमिष्यसि ।
तदाकूटं तववचो भविष्यति न संशयः ॥ २५ ॥
पूर्वंकृतं हि यच्छ्रेयो भस्मीभूतं भविष्यति ॥ २६ ॥

राजोवाच ।

सत्यमुक्तं त्वयाभद्रे साध्यासाध्यंन चास्तिमे । सर्वंसाध्यंसुलोकं मे सुप्रसाद
स्वर्गं देवि यतोनैमि तत्र मे कारणं शृणु । भागं तु तेन दास्यन्ति ममसृत्यु
ततो मे मानवाःसर्वे प्रजाःसर्वावरानने । मृत्युयुक्ता भविष्यन्ति मयाहीना
गन्तुं स्वर्गं न वाञ्छामि सत्यमुक्तं वरानने ॥ ३० ॥

देव्युवाच ।

लोकान्दृष्ट्वा महाराजआगमिष्यसिवै पुनः । पूरयस्व ममाद्यत्वं जातांश्च

राजोवाच ।



सर्वमेवं करिष्यामि यत्त्वयोक्तं न संशयः । समालोक्य महातेजा ययातिर्नृ

मुक्त्वा प्रियांराजाचिन्तयामास वै तदा । अन्तर्जलचरोमत्स्यःसोऽपिजालेन बध्यते
त्समानवेगोऽपि मृगःप्राप्नोति बन्धनम् । योजनानां सहस्रस्थमामिषं वीक्षतेखगः ॥

सकण्ठलग्नपाशं च न पश्यद्दैवमोहितः ।
सर्वैषम्यकरःकालःकालःसम्मानहानिदः ॥ ३५ ॥

भावकरःकालो यत्रकुत्रापि तिष्ठतः । नरंकरोति दातारं याचितारं च वै पुनः ॥
नि स्थावरादीनि दिवि वा यदि वा भुवि । सर्वं कलयतेकालःकालोह्येक इदंजगत्
दिनिधनोधाता जगतःकारणंपरम् । लोकान्कालःसपचति वृक्षेफलमिवाहितम् ॥

न मन्त्रा न तपोदानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ ३९ ॥

कालकृताःपाशाःशक्यन्ते नातिवर्तितुम् । विवाहोजन्ममरणं यदायत्र तु येन च ॥
जलधाराव्योम्नि भ्राम्यन्ते मातरिश्वना । तथेदंकर्मयुक्तेन कालेन भ्राम्यते जगत्

सुकर्मोवाच ।

लोऽयं कर्मयुक्तस्तु योनरैःसमुपासितः । कालस्तुप्रेरयेत्कर्म तं तं कालःकरोतिसः॥
वा घातदोषाःसर्पाश्चव्याधयस्ततः । सर्वेकर्मनियुक्तास्ते प्रचरन्ति च मानुषे ॥४३॥
स्यहेतवो ये च उपायाःपुण्यमिश्रिताः । ते सर्वे कर्मसंयुक्ता नपश्येयुःशुभाशुभम्॥

कर्मदा यदि वा लोके कर्मसम्बन्धि बान्धवाः ।
कर्माणि चोदयन्तीह पुरुषं सुखदुःखयोः ॥४५ ॥

र्णंरजतंवापि यथारूपंविनिश्चितम् । तथानिबध्यते जन्तुःस्वकर्मणिवशानुगः॥४६॥
तानीहसृज्यन्ते गर्भस्थस्यैव देहिनः । आयुःकर्म च वित्तं च विद्या निधनमेव च ॥
मृत्पिण्डतःकर्ता कुरुते यद्यदिच्छति । तथापूर्वकृतंकर्म कर्तारमनुगच्छति ॥ ४८ ॥

देवत्वमथ मानुष्यं पशुत्वं पक्षिता तथा ।
तिर्यक्त्वं स्थावरत्वं च प्राप्यते च स्वकर्मभिः ॥ ४९ ॥

वत्तथाभुङ्क्ते नित्यं विहितमात्मना । आत्माविहितंदुःखं चात्मनाविहितंसुखम् ॥

मध्यामुपादाय भुञ्जते पूर्वदैहिकम् । सन्त्यजन्तिस्वकंकर्म न क्वचित्पुरुषा भुवि ॥

बलेन प्रज्ञयावापि समर्थाःकर्तुमन्यथा ।
सुकृतान्युपभुञ्जन्ति दुःखानि च सुखानि च ॥ ५२ ॥
हेतुंप्राप्य नरोनित्यं कर्मबन्धैस्तु बध्यते । यथाधेनुसहस्रेषु वत्सोविन्दति मा
तथाशुभाशुभंकर्म कर्तारमनुगच्छति । उपभोगादृतेयस्य नाशएव न विद्यते।
प्राक्तनं बन्धनंकर्म कोऽन्यथाकर्तुमर्हति। सुशीघ्रमपि धावन्तं विधानमनुधावति
शेतेसहशयानेन पुराकर्म यथाकृतम् ।
उपविष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ॥ ५६ ॥
करोति कुर्वतःकर्म च्छायेवानुविधीयते । यथाछाया तपौनित्यं सुसम्बद्धौपरस्प
तद्वत्कर्म च कर्ता च सुसम्बद्धौपरस्परम् ।
ग्रहारोगाविषाःसर्पाःशाकिन्यो राक्षसास्तथा ॥ ५८ ॥
पीडयन्ति नरंपश्चात्पीडितं पूर्वकर्मणा । येन यत्रोपभोक्तव्यं सुखं वा दुःखमे
स तत्रबद्ध्वारज्ज्वा वै बलाद्दैवेन नीयते । दैवःप्रभुर्हिभूतानां सुखदुःखोपपादने
अन्यथा चिन्त्यतेकर्म जाग्रता स्वपतापि वा ।
अन्यथा स तथा प्राज्ञ दैवएवं जिघांसति ॥ ६१ ॥
शस्त्राग्नि विषदुर्गेभ्यो रक्षितव्यं च रक्षति । अरक्षितं भवेत्सत्य तद्दैवं दैवरक्षि
दैवेन नाशितंयत्तु तस्यरक्षा न दृश्यते । यथापृथिव्यां बीजानि उप्तानिं च धना
तथैवात्मनि कर्माणि तिष्ठन्ति प्रभवन्ति च । तैलक्षयाद्यथादीपो निर्वाणमधि
कर्मक्षयात्तथाजन्तुःशरीरान्नाशमृच्छति ।
कर्मक्षयात्तथामृत्युस्तत्त्वविद्भिरुदाहृतः ।। ६५ ॥
विविधाःप्राणिनस्तस्य मृत्योरोगाश्च हेतवः । तथाममविपाकोऽयं पूर्वंकृतस्य
सम्प्राप्तो नात्रसन्देहःस्त्रीरूपोऽयं न संशयः । क्व मे गेहं समायाता नाटका नट
तेषां सङ्गप्रसङ्गेन जरादेहं समाश्रिता ।
सर्वं कर्मकृतंमन्ये यन्मे सम्भावितं ध्रुवम् ॥ ६८ ॥
तस्मात्कर्मप्रधानं च उपायाश्च निरर्थकाः । पुरा वै देवराजेन मदर्थं दूतसंचम

तो मातलिर्नाम नक्तं तस्यतद्वचः । तस्यकर्मविपाकोऽयं दृश्यते साम्प्रतं मम ॥
इति चिन्तापरोभूत्वा दुःखेनमहतान्वितः ।
यद्यस्याहिवचःप्रीत्या न करोमि हि सर्वथा ॥ ७१ ॥
धर्मावुभावेतौ यास्यतस्तौ न संशयः । सदृशं च समायातं यद्दृष्टं ममकर्मणा ॥
ष्यति न सन्देहो दैवो हि दुरतिक्रमः । एवंचिन्तापरोभूत्वा ययातिःपृथिवीपतिः
कृष्णं क्लेशापहंदेवं जगाम शरणंहरिम् ।
ध्यात्वा नत्वा ततःस्तुत्वा मनसा मधुसूदनम् ॥ ७४ ॥
त्राहि मां शरणंप्राप्तस्त्वामहं कमलाप्रिय ॥ ७५ ॥
इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेमातापितृतीर्थवर्णनेययातिचरित्रे
एकाशीतितमोऽध्यायः ॥ ८१ ॥

———

## द्व्यशीतितमोऽध्यायः

बिन्दुमत्याःस्वर्गगमनायात्याग्रहं दृष्ट्वा पूरुपुत्रायराज्यंसमर्प्य जराग्रहणम्

सुकर्मोवाच ।

चिन्तयतेयावद्राजा परमधार्मिकः । तावत्प्रोवाच सा देवी रतिपुत्री वरानना ॥१॥
चिन्तयसे राजंस्त्वमिहैव महामते । प्रायेणापि स्त्रियःसर्वाश्चपलाःस्युर्नसंशयः
नाहंचापल्यभावेन त्वामेवं प्रविचालये ।
नाहं हि कारयाम्यद्य भवत्पार्श्वं नृपोत्तम ॥ ३ ॥
अन्यस्त्रियो यथालोके चपलत्वाद्वदन्ति च ।
अकार्यं राजराजेन्द्र लोभान्मोहाच्च लम्पटाः ॥ ४ ॥
नानांदर्शनायैव ज्ञाताश्रद्धा ममोरसि । देवानां दर्शनंपुण्यं दुर्लभं हि सुमानुषैः ॥
च दर्शनं राजन्कारयामि वदस्व मे । दोषंपापकरंयत्तु मत्सङ्गादिह चेद्भवेत् ॥ ६ ॥

कथंचिन्तयसेदुःखं यथान्यःप्राकृतोजनः । महाभयाद्यथाभीतो मोहगतं
त्यजचिन्तां महाराज न गन्तव्यं त्वयादिवि । येन ते जायतेदुःखं तन्नकार्यं म
एवमुक्तस्तथाराजा तामुवाच वराननाम् । चिन्तितंयन्मयादेवि तच्छृणुष्व हि
मानभङ्गो मयादृष्टो नैवस्वस्यमनः प्रिये । मयिस्वर्गगते कान्ते प्रजादीना भ

त्रासयिष्यति दुष्टात्मा यमस्तु व्याधिभिःप्रजाः ।
त्वयासार्धं प्रयास्यामि स्वर्गलोकं वरानने ॥ ११ ॥
एवमाभाष्य तां राजा समाहूय सुतोत्तमम् ।
पूरुं तं सर्वधर्मज्ञं जरायुक्तं महामतिम् ॥ १२ ॥

एह्येहि सर्वधर्मज्ञ धर्मंजानासि निश्चितम् । ममाज्ञयाहि धर्मात्मन्धर्मःसम्पालि
जरा मे दीयतां तात तारुण्यं गृह्यतां पुनः । राज्यंकुरु ममेदं त्वं सकोश ब
आसमुद्रां प्रभुङ्क्ष्वत्वं रत्नपूर्णां वसुन्धराम् । मयादत्तां महाभाग सग्रामव

प्रजानां पालनंपुण्यं कर्तव्यं च सदानघ ।
दुष्टानां शासनंनित्यं साधूनां परिपालनम् ॥ १६ ॥

कर्तव्यं च त्वयावत्स धर्मशास्त्रप्रमाणतः । ब्राह्मणानां महाभाग विधिनापि

भक्त्या च पालनंकार्यं यस्मात्पूज्या जगत्त्रये ।
पञ्चमे सप्तमे घस्रे कोशंपश्य विपश्चितः ॥ १८ ॥

बलं च नित्यं सम्पूज्यं प्रसादधनभोजनैः । चारचक्षुर्भवस्वत्वं नित्यंदानपरोभ
भवस्व नियतोमन्त्रे सदागोप्यःसुपण्डितैः । नियतात्मा भवस्वत्वं मागच्छ

विश्वासःकस्य नोकार्यःस्त्रीषुकोशे महाबले ।
पात्राणां त्वं तु सर्वेषां कलानां कुरुसङ्ग्रहम् ॥ २१ ॥

यजयज्ञैर्हृषीकेशं पुण्यात्माभव सर्वदा । प्रजानां कण्टकान्सर्वान्मर्दयस्व
प्रजानां वाञ्छितंसर्वमर्पयस्व दिनेदिने । प्रजासौख्यं प्रकर्तव्यं प्रजाःपोषय पु
स्वस्त्रीवंशःप्रकर्तव्यःपरदारेषु माकृथाः । मतिंदुष्टां परस्वेषु पूर्वानन्वेहि सर्वज्ञ

वेदानां हि सदाचिन्ता शास्त्राणां हि च सर्वदा ।

कुरुष्वैवं सदावत्स शस्त्राभ्यासरतो भव ॥ २५ ॥

स्तुष्टः सर्वदावत्स स्वशय्यानिरतोभव । गजस्यवाजिनोऽभ्यासं स्यन्दनस्य च सर्वदा

समादिश्य तं पुत्रमाशीर्भिरभिनन्द्य च । स्वहस्तेन च संस्थाप्य करेदत्तं स्वमायुधम्

मांजरां तु समागृह्य दत्त्वातारुण्यमस्य च । गन्तुकामस्ततः स्वर्गं ययातिः पृथिवीपतिः

ति श्रीपाद्मपुराणे द्वितीये भूमिखण्डेवेनोपाख्यानेमातापितृतीर्थवर्णने ययातिचरित्रे

द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

## त्र्यशीतितमोऽध्यायः

यातेः बहुभिः प्रजाजनैः सह तयाश्रुबिन्दुमत्याच सह वैष्णवलोकंप्रतिगमनम् ।

सुकर्मोवाच ।

माहूय प्रजाः सर्वा द्वीपानां वसुधाधिपः । हर्षेणमहताविष्ट इदंवचनमब्रवीत् ॥ १ ॥

द्रलोकं ब्रह्मलोकं रुद्रलोकमतः परम् । वैष्णवं सर्वपापघ्नं प्राणिनां गतिदायकम् ॥

याम्यहं न सन्देहो ह्यनयासह सत्तमाः । ब्राह्मणाः क्षत्रियावैश्याः सशूद्राश्च प्रजामम ॥

सेनापि सकुटुम्बैः स्थातव्यं तु महीतले । पूरुरेष महाभागो भवतां पालकस्त्विह ॥

स्थापितोऽस्ति मयालोका राजाधीरः सदण्डकः ।

एवमुक्तास्तु ताः सर्वाः प्रजा राजानमब्रुवन् ॥ ५ ॥

यते सर्ववेदेषु पुराणेषु नृपोत्तम । धर्मएवं यतोलोके न दृष्टः केन वै पुरा ॥ ६ ॥

शोऽस्माभिरसौधर्मो दशाङ्गः सत्यवल्लभः । सोमवंशसमुत्पन्नो नहुषस्य महागृहे ॥

तपादसुखैर्युक्तः सर्वाचारप्रचारकः । ज्ञानविज्ञानसम्पन्नः पुण्यानां च महानिधि ॥८॥

णानां हि महाराज आकरः सत्यपण्डितः । कुर्वन्ति च महाधर्मं सत्यवन्तो महौजसः

यमं दृष्टवन्तः स्म भवन्तं कामरूपिणम् । भवन्तं कामकर्तारमीदृशं सत्यवादिनम् ॥



कर्मणा त्रिविधेनापि वयंत्यक्तुं न शक्नुमः ।

यत्र त्वं तत्रगच्छामःसुसुखं पुण्यमेव च ॥ ११ ॥
नरकेऽपि भवान्यत्र वयंतत्र नसंशयः । किंदारैर्धनभोगैश्च किंजीवैर्जीवितेन च ॥
त्वां विना सुमहाराज तेननास्त्यत्र कारणम् ।
त्वयैवसह राजेन्द्र वयं यास्याम नान्यथा ॥ १३ ॥
एवंश्रुत्वा वचस्तासां प्रजानां पृथिवीपतिः । हर्षेणमहताविष्टःप्रजावाक्यमुवा
आगच्छन्तु मयासार्द्धं सर्वेलोकाःसुपुण्यकाः ।
नृपोरथं समारुह्य तया वै कामकन्यया ॥ १५ ॥
रथेनहंसवर्णेन चन्द्रबिम्बानुकारिणा । चामरैर्व्यजनैश्चापि वीज्यमानो गतव्यथः
केतुना तेनपुण्येन शुभ्रेणापि महीयसा । शोभमानो यथादेवो देवराजःपुरन्दरः
ऋषिभिःस्तूयमानस्तु बन्दिभिश्चारणैस्तथा । प्रजाभिःस्तूयमानश्च ययातिर्नहु
प्रजाःसर्वास्ततोयानैःसमायाता नरेश्वरम् । गजैरश्वैरथैश्चान्यैःप्रस्थिताश्च दिवं
ब्राह्मणाःक्षत्रिया वैश्याःशूद्राश्चान्ये पृथग्जनाः ।
सर्वे च वैष्णवालोका विष्णुध्यानपरायणाः ॥ २० ॥
तेषां तु केतवःशुक्ला हेमदण्डैरलङ्कृताः । शङ्खचक्राङ्किताःसर्वेसदण्डाःसपताकि
प्रजावृन्देषु भासन्ते पताका मारुतेरिताः । दिव्यमालाधरास्सर्वे शोभितास्तुलसी
दिव्यचन्दनदिग्धाङ्गा दिव्यगन्धानुलेपनाः । दिव्यवस्त्रकृताशोभा दिव्याभरणभूषि
सर्वेलोकःसुरुपास्ते राजानमुपजग्मिरे । प्रजाशतसहस्राणि लक्षकोटिशतानि च
अर्वखर्वसहस्राणि तेजनाःप्रतिजग्मिरे । ते तु राज्ञासमंसर्वे वैष्णवाःपुण्यकर्मि
विष्णुध्यानपराःसर्वे जपदानपरायणाः ॥ २६ ॥

सुकर्मोवाच ।

एवं ते प्रस्थिताःसर्वे हर्षेणमहतान्विताः । पूरुंपुत्रं महाराज स्वराज्ये परिषिच्य
ऐन्द्रंलोकं जगामाथ ययातिःपृथिवीपतिः । तेजसा तस्यपुण्येन धर्मेणतपसा
ते जनाःप्रस्थिताःसर्वे वैष्णवंलोकमुत्तमम् । ततोदेवाःसगन्धर्वाःकिन्नराश्चारणा
सहितादेवराजेन आगताःसंमुखं तदा । तस्यैवापि नृपेन्द्रस्य पूजयन्तो नृपोत्तम

इन्द्र उवाच ।

स्वागतं ते महाराज ममगेहं समाविश ।

अत्रभोगान्प्रभुङ्क्ष्वत्वं दिव्यान्कामान्मनोऽनुगान् ॥ ३१ ॥

राजोवाच ।

...स्राक्ष महाप्राज्ञ तवपादाम्बुजद्वयम् । नमस्करोम्यहंदेव ब्रह्मलोकं व्रजाम्यहम् ॥३२॥

...संस्तूयमानश्च ब्रह्मलोकं जगामह । पद्मयोनिर्महातेजाःसार्धंमुनिवरैस्तथा ॥ ३३ ॥

आतिथ्यं च चकारस्य पाद्यार्घादिसुविष्टरैः ।

उवाच विष्णुलोकं हि प्रयाहि त्वं स्वकर्मणा ॥ ३४ ॥

...माभाषिते धात्रा जगामशिवमन्दिरम् । चक्रे आतिथ्यपूजां च उमयासह शङ्करः ॥

तस्यैवापि नृपेन्द्रस्य राजानमिदमब्रवीत् ।

कृष्णभक्तोऽसि राजेन्द्र ममापि सुप्रियो भवान् ॥ ३६ ॥

... ययातेराजेन्द्र वसत्वं ममम न्दिरे । सर्वान्भोगान्प्रभुङ्क्ष्वत्वं दुःखप्राप्यान्हिमानुषैः

अन्तरंनास्ति राजेन्द्र ममविष्णोर्नसंशयः ।

योऽसौ विष्णुस्वरूपेण स वै रुद्रो न संशयः ॥३८ ॥

...द्रो विद्यते राजन्स च विष्णुःसनातनः। उभयोरन्तरंनास्ति तस्माच्चैव वदाम्यहम्

...ष्णुभक्तस्यपुण्यस्य स्थानमेव ददाम्यहम् । तस्मादत्रमहाराज स्थातव्यं हि त्वयानघ

...मुक्तःशिवेनापि ययातिर्हरिवल्लभः । भक्त्याप्रणम्य देवेशं शङ्करं नतकन्धरः ॥

...सर्वं महादेव त्वयोक्तमिह साम्प्रतम् । युवयोरन्तरंनास्ति एकामूर्तिर्द्विधा भवत् ॥

वैष्णवं गन्तुमिच्छामि पादौतव नमाम्यहम् ।

एवमस्तु महाराज गच्छलोकं तु वैष्णवम् ॥ ४३ ॥

...आदिष्टःशिवेनापि प्रतस्थे वसुधाधिपः । पृथ्वीशस्तैर्महापुण्यैर्वैष्णवैर्विष्णुवल्लभैः ॥

...यमानैस्ततस्तैस्तु पुरतस्तस्य भूपतेः । शङ्खशब्दैःसुपापघ्नैःसिंहनादैःसुपुष्कलैः ॥

जगाम निःस्वनै राजा पूज्यमानःसुचारणैः ।

सुस्वरैर्गीयमानस्तु पाठकैःशास्त्रकोविदैः ॥ ४६ ॥

गायन्ति पुरतस्तस्य गन्धर्वा गीततत्पराः । ऋषिभिः स्तूयमानश्च वेदवृन्दैः समन्ति
अप्सरोभिः सुरूपाभिः सेव्यमानः सनाहुषिः । गन्धर्वैः किन्नरैः सिद्धैश्चारणैः पुण्यम
साध्यैर्विद्याधरै राजा मरुद्भिर्वसुभिस्तथा ।
रुद्रैश्चादित्यवर्गैश्च लोकपालैर्दिगीश्वरैः ॥ ४६ ॥
स्तूयमानो महाराजस्त्रैलोक्येन समन्ततः । ददृशे वैष्णवं लोकमनौपम्यमनाम
विमानैः काञ्चनै राजा सर्वशोभा समाविलैः । हंसकुन्देन्दुधवलैर्विमानैरुपशोभि
प्रासादैः शतभौमैश्च मेरुमन्दरसन्निभैः । शिखरैरुल्लिखद्भिश्च स्वर्व्योमहाटकानि
जाज्वल्यमानैः कलशैः शोभते सुपुरोत्तमम्
तारागणैर्यथाऽऽकाशं तेजःश्रिया प्रकाशते ॥ ५३ ॥
प्रज्वलत्तेजोज्वालाभिर्लोचनैरिवलोकते । नानारत्नैर्हरैर्लोकः प्रहसद्दशनैरिव ।
समाह्वयति तान्पुण्यान्वैष्णवान्विष्णुवल्लभान् ।
ध्वजव्याजेन राजेन्द्र चलिताग्रैः सुपल्लवैः ॥ ५५ ॥
श्वसनान्दोलितैस्तैश्च ध्वजाग्रैश्चमनोहरैः । हेमदण्डैश्च घण्टाभिः सर्वत्र समलङ्कृ
सूर्यतेजःप्रकाशैश्च गोपुराट्टालकैस्ततः । गवाक्षैर्जालमालैश्च वातायनमनोहरैः ।
प्रतोलीनां प्रकाशैश्च प्राकारैर्हेमरूपकैः ।
तोरणैः सुपताकाभिर्नानाशब्दैः सुमङ्गलैः ॥ ५८ ॥
कलशाग्रैश्चक्रबिम्बै रविबिम्बसमप्रभैः ।
सुभोगैः शतकक्षैश्च निर्जलाम्बुदसन्निभैः ॥ ५६ ॥
दण्डच्छत्रसमाकीर्णैः कलशैरुपशोभितैः । प्रावृट्कालाम्बुदाकारैर्मन्दिरैरुपशोभि
कलशैः शोभमानैस्तैर्ऋक्षैर्द्यौरिव भूतलम् । दण्डजालपताकाभिर्ऋक्षजालस
तादृशैः स्फाटिकाकारैः कान्तिशङ्खेन्दुसन्निभैः ।
हेमप्रासादसम्बाधैर्नानाधातुमयैस्ततः ॥ ६२ ॥
विमानैरर्बुदसङ्ख्यैः शतकोटिसहस्रकैः । सर्वभोगयुतैश्चैव शोभते हरिपत्तनम् ।
यैः समाराधितो देवः शङ्खचक्रगदाधरः । तत्प्रसादात्सुकृतेषु निवसन्ति गृहे

सर्वपुण्येषु दिव्येषु भोगाढ्येषु च मानवाः ।
वैष्णवाःपुण्यकर्माणो निर्धूताशेषकल्मषाः ॥ ६५ ॥
[...]गृहैःपुण्यैःशोभितं विष्णुमन्दिरम् । नानावृक्षैःसमाकीर्णं वनैश्चन्दनशोभितैः
[...]मफलैराजन्सर्वत्र समलङ्कृतम् । वापीकुण्डतडागैश्च सारसैरुपशोभितैः ॥
हंसकारण्डवाकीर्णैःकह्लारैरुपशोभितैः ।
शतपत्रैर्महापद्मैःपद्मोत्पलविराजितैः ॥ ६८ ॥
कनकोत्पलवर्णैश्च सरोभिश्च विराजते ।
वैकुण्ठं सर्वशोभाढ्यं देवोद्यानैरलङ्कृतम् ॥ ६९ ॥
[...]शोभासमाकीर्णं वैष्णवैरुपशोभितम् । वैकुण्ठं ददृशेराजा मोक्षस्थानमनुत्तमम्
[...]न्दैःसमाकीर्णं ययातिर्नहुषात्मजः । प्रविवेश पुरंरम्यं सर्वदाहविवर्जितम् ॥
ददृशे सर्वक्लेशघ्नं नारायणमनामयम् ।
विमानैरुपशोभन्तं सर्वाभरणशालिनम् ॥ ७२ ॥
[...]न्तं जगन्नाथं श्रीवत्साङ्कं महाद्युतिम् । वैनतेयसमारूढं श्रियायुक्तं परात्परम् ॥
[...]ं देवलोकानां योगतिःपरमेश्वरः । परमानन्दरूपेण कैवल्येन विराजते ॥
[...]मानं महालोकैःसुपुण्यैर्वैष्णवैर्हरिम् । देववृन्दैःसमाकीर्णं गन्धर्वगणसेवितम् ॥
अप्सरोभिर्महात्मानं दुःखक्लेशापहं हरिम् ।
नारायणं ननामाथ स्वपत्न्यासह भूपतिः ॥ ७६ ॥
[...]र्मानवाःसर्वे वैष्णवा मधुसूदनम् । गता ये वैष्णवाःसर्वे सहराज्ञा महामते ॥
पादाम्बुजद्वयं तस्य नेमुर्भक्त्या महामते ।
प्रणमन्तं महात्मानं राजानं दीप्ततेजसम् ॥ ७८ ॥
तमुवाच हृषीकेशस्तुष्टोऽहं तव सुव्रत ॥
[...]रय राजेन्द्र यत्ते मनसिवर्तते । तत्ते ददाम्यसन्देहं मद्भक्तोऽसि महामते ॥ ७९ ॥

राजोवाच ।



[...] त्वं देवदेवेश तुष्टोऽसि मधुसूदन । दासत्वं देहि सततमात्मानश्च जगत्पते ॥

विष्णुरुवाच ।

एवमस्तु महाभाग ममभक्तो न संशयः । लोकेममहाराज स्थातव्यमन
एवमुक्तो महाराजो ययातिःपृथिवीपतिः । प्रसादात्तस्यदेवस्य विष्णुलोकंप
निवसत्येष भूपालो वैष्णवंलोकमुत्तमम् ॥ ८३ ॥

इति श्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्याने पितृतीर्थवर्णनेययातिच
ययातेःस्वर्गारोहणंनामत्र्यशीतितमोऽध्यायः ॥८३॥

---

# चतुःशीतितमोऽध्यायः

## गुरुतीर्थमाहात्म्यवर्णने च्यवनचरित्रवर्णनम् ।

सुकर्मोवाच ।

एतत्तेसर्वमाख्यातं चरित्रं पापनाशनम् । पुत्राणां तारकंदिव्यं बहुपुण्यप्रद
प्रत्यक्षं दृश्यतेलोके ययातिचरितं श्रुतम् । पूरुणाप्तं महद्राज्यं दुर्गतिंगतवा
पितृप्रसादात्कोपाच्च यथाजातं तथा पुनः । पुत्राणां तारकंपुण्यं यशस्य धन
शापयुक्ताविमौचोभौ तुरुश्च यदुरेव चं । पितृमातृसमंनास्ति अभिष्टफल
साभिलाषेण भावेन पितापुत्रं समाह्वयेत् ।
माता च पुत्रपुत्रीति तस्य पुण्यफलं शृणु ॥ ५ ॥
समाहूतो यथापुत्रःप्रयाति मातरंप्रति ।
यो यातिहर्षसंयुक्तो गङ्गास्नानंफलं लभेत् ॥ ६ ॥
पादप्रक्षालनंयस्तु कुरुते च महायशाः । सर्वतीर्थफलं भुङ्क्ते प्रसादात्तु
अङ्गसंवाहनाच्चान्यदश्वमेधफलंलभेत् । भोजनाच्छादनस्नानैर्गुरुं यःपोषये
पृथ्वीदानसमंपुण्यं तत्पुत्रे हि. प्रजायते । सर्वतीर्थमयीगङ्गा तथामाता न
बहुपुण्यमयःसिन्धुर्यथालोके प्रतिष्ठितः । अस्मिल्लोके पिताह्येतत्पुराणकवयो

भ्रंशते क्रोशते यस्तु पितरं मातरं पुनः।
सपुत्रो नरकंयाति रौरवाख्यं न संशयः॥ ११॥
…रंपितरंवृद्धौ गृहस्थो यो न पोषयेत्। सपुत्रो नरकंयाति वेदनांप्राप्नुयाद्ध्रुवम्॥
…ते पापकर्ता यो गुरुंपुत्रःसुदुर्मतिः। निष्कृतिर्नैवद्दष्टा वै पुराणैःकविभिःकदा॥
एवं ज्ञात्वा ह्यहंविप्र पूजयामि दिने दिने।
मातरं पितरं नित्यं भक्त्यानमितकन्धरः॥ १४॥
…कृत्यं वदेच्चैव समाहूय गुरुर्मम। तत्करोम्यविचारेण शक्त्यास्वस्य च पिप्पल
…मे परमंज्ञानं सञ्जातं गतिदायकम्। एतयोश्च प्रसादेन संसारे परिवर्तते॥ १६॥
यच्चकिंचित्प्रकुर्वन्ति मानवा भुविसंस्थिताः।
गृहस्थस्तदहंजाने यच्चस्वर्गे प्रवर्तते॥ १७॥
नागानां च इहस्थोऽपि चारं जानामि पिप्पल।
एतयोश्च प्रसादेन ज्ञानं मे जातमुत्तमम्॥ १८॥
गच्छविद्याधरश्रेष्ठ भवानर्चतु माधवम्॥ १९॥

विष्णुरुवाच।

…बोधितस्तेन पिप्पलो हि स्वकर्मणा। आनम्यतं द्विजश्रेष्ठं लज्जितोऽपि दिवंययौ
…र्मासोऽपि धर्मात्मा गुरुंशुश्रूषते नृप। एतत्ते सर्वमाख्यातं पितृतीर्थानुगंमया॥
अन्यत्किं ते प्रवक्ष्यामि वदवेन महामते॥ २२॥
…ति श्रीपाद्मपुराणे द्वितीयेभूमिखण्डेवेनोपाख्याने मातापितृतीर्थमाहात्म्यवर्णनंनाम
चतुरशीतितमोऽध्यायः॥ ८४॥

---

# पञ्चाशीतितमोऽध्यायः

## गुरुतीर्थमाहात्म्यवर्णनेच्यवनचरित्रवर्णनम् ।

वेन उवाच ।

भगवन्देवदेवेश प्रसादाच्च ममत्वया । भार्यातीर्थं समाख्यातं पितृतीर्थमनुत्त
मातृतीथ हृषीकेश बहुपुण्यप्रदायकम् । प्रसादसुमुखोभूत्वा गुरुतीर्थं वदस्व मे ।

श्रीभगवानुवाच ।

कथयिष्याम्यहं राजन्गुरुतीर्थमनुत्तमम् । सर्वपापहरं प्रोक्तं शिष्याणां गतिदा
शिष्याणां परमंपुण्यं धर्मरूपं सनातनम् । परंतीर्थं परंज्ञानं प्रत्यक्ष फलदायक
यस्यप्रसादाद्राजेन्द्र इहैव फलमश्नुते । परलोके सुखंभुङ्क्ते यशःकीर्तिमवाप्नुया

प्रसादाद्यस्य राजेन्द्र गुरोश्चैव महात्मनः ।
प्रत्यक्षं दृश्यते शिष्यैस्त्रैलोक्यं सचराचरम् ॥ ६ ॥

व्यवहारं च लोकानामाचारं नृपनन्दन । विज्ञानं विन्दते शिष्यो मोक्षंचैव प्र
सर्वेषामेवलोकानां यथासूर्यःप्रकाशकः । गुरुःप्रकाशकस्तद्वच्छिष्याणां बुद्धि

रात्रावेवप्रकाशेच्च सोमोराजा नृपोत्तम ।
तेजसा नाशयेत्सर्वमन्धकारं चराचरे ॥ ९ ॥

गृहे प्रकाशयेद्दीपःसमूहं नृपसत्तम । तेजसानाशयेत्सर्वमन्धकारं घनाविलम् ।
अज्ञानतमसाव्याप्तं शिष्यं द्योतयतेगुरुः । शिष्यप्रकाशउद्द्योतैरुपदेशैर्महामते ।
दिवाप्रकाशकःसूर्यःशशी रात्रोप्रकाशकः । गृहप्रकाशकोदीपस्तमोनाशकरःसदा

रात्रौदिवा गृहस्यान्ते गुरुःशिष्यं सदैव हि ।
अज्ञानाख्यं तमस्तस्य गुरुःसर्वं प्रणाशयेत् ॥ १३ ॥

तस्माद्गुरुःपरंतीर्थं शिष्याणमवनीपते । एवंज्ञात्वा ततःशिष्यःसर्वदा तं प्रपू
गुरुं पुण्यमयंज्ञात्वा त्रिविधेनापि कर्मणा । इत्यर्थं श्रूयते राजन्नितिहासःपु

सर्वपापहरःप्रोक्तश्च्यवनस्य महात्मनः ।
भार्गवस्य कुलेजातश्च्यवनो मुनिसत्तमः ॥ १६ ॥
चिन्तासमुत्पन्ना एकदा तु नृपोत्तम । कदाहं ज्ञानसम्पन्नो भविष्यामि महीतले ॥
रात्रौ चिन्तयन्स ज्ञानार्थी मुनिसत्तमः । एवं तु चिन्तमानस्यमतिरासीन्महात्मनः
तीर्थयात्रां प्रयास्यामि अभीष्टफलदायिनीम् ।
गृहक्षेत्रादि सन्त्यज्य भार्यां पुत्रंधनं ततः ॥ १९ ॥
यात्राप्रसङ्गेन अटते मेदनीं तदा । लोमानुलोमयात्रांस गङ्गायाःकृतवान्नृप ॥ २० ॥
नर्मदायाश्च सरस्वत्या मुनीश्वरः । गोदावर्यादि सर्वासां नदीनां सागरस्य च ॥
अन्येषां सर्वतीर्थानां क्षेत्राणां च नृपोत्तम ।
देवानां पुण्यलिङ्गानां यात्राव्याजेन सोऽभ्रमत् ॥ २२ ॥
माणस्य तस्यापि तीर्थेषु परमेषु च । कायश्च निर्मलोजातःसूर्यतेजःसमप्रभः ॥२३॥
नःकाशतेदीप्त्या पूतात्मानेनकर्मणा । भ्रममाणःसमायातःक्षेत्राणामुत्तमं तदा ॥
दक्षिणेकुले नाम्नाअमरकण्टकम् । ददर्श सुमहालिङ्गं सर्वेषां गतिदायकम् ॥२५॥
नत्वास्तुत्वा तु सम्पूज्य सिद्धनाथं महेश्वरम् ।
ज्वालेश्वरं ततो दृष्ट्वा दृष्ट्वा चाप्यमरेश्वरम् ॥ २६ ॥
कपिलेशं च मार्कण्डेश्वरमुत्तमम् । एवंयात्रां ततःकृत्वा ओङ्कारं समुपागतः ॥
छायांसमाश्रित्य शीतलां श्रमनाशिनीम् । सुखेनसंस्थितोविप्रश्च्यवनो भृगुनन्दनः
वनं सशुश्राव समुक्तंपक्षिणा तदा । दिव्यभाषासमायुक्तं ज्ञानविज्ञानसंयुतम् ॥
शुकश्च एकस्तत्रास्ते बहुकाल प्रजीवकः ।
कुञ्जलोनाम धर्मात्मा चतुष्पुत्रःसभार्यकः ॥ ३० ॥
लस्य हि पुत्राश्च चत्वारःपितृनन्दनाः । तेषांनामानि राजेन्द्र कथयिष्ये तवाग्रतः
तुउज्ज्वलोनाम द्वितीयस्तुसमुज्ज्वलः । तृतीयोविज्वलोनामचतुर्थश्च कपिञ्जलः
एवं पुत्रास्तु चत्वारःकुञ्जलस्य महामते ।
शुकस्य तस्य पुण्यस्य पितृमातृपरायणाः ॥ ३२ ॥

भ्रमन्ति गिरिकुञ्जेषु द्वीपेषु च समाहिताः। भोजनार्थं तु संक्षुब्धाःक्षुधयापरि
स्वोदरस्थांक्षुधां सौम्यफलैरमृतसन्निभैः। अमृतस्वादुतोयेन शमयन्ति
नित्यंश्चैव रसाढ्यानि आहारार्थं सुपुत्रकाः।
नीत्वाफलानि दम्पत्योर्निक्षिपन्ति प्रयत्नतः ॥ ३६ ॥
मातुरर्थे महाभागा भक्तिभावसमन्विताः। तुष्टाआहारमुत्पाद्य भक्षयन्ति प
तत्रक्रीडारताःसर्वे विलसन्ति रमन्ति च। सन्ध्याकालंसमाज्ञाय पितुरन्ति
आयान्ति भक्ष्यामादाय गुर्वर्थं तु प्रयत्नतः।
पश्यतस्तस्य विप्रस्य च्यवनस्य महात्मनः ॥ ३९ ॥
आगतास्त्वण्डजाःसर्वे पितुर्नीडं सुशोभनम्। पितरंमातरंचोभौ प्रणेमुस्ते
ताभ्यां भक्ष्यंसमासाद्य उपतस्थुस्तयोःपुरः।
सर्वे सम्भाषिताः पित्रामानितास्ते सुतोत्तमाः ॥ ४१ ॥
मात्रा च कृपया राजन्वचनैःप्रीतिसंमितैः। पक्षवातेनशीतेन मातापित्रोश्च
तेषामाप्यायनं तौद्वौ चक्राते पक्षिणौ नृप। आशिर्भिरभिनन्द्यैव द्वाभ्यामपि
तैश्चदत्तं सुसम्पुष्टमाहारममृतोपमम्। तावेव हि सुसम्प्रीतिं चक्राते द्विजस
पिबतो निर्मलंतोयं तीर्थकोटिसमुद्भवम्।
स्वस्थानं तु समाश्रित्य सुखसन्तुष्टमानसौ ॥ ४५ ॥
चक्राते च कथांदिव्यां सुपुण्यां पापनाशिनीम्।
पित्रा तु कुञ्जलेनापि पृष्ट उज्ज्वल आत्मजः ॥ ४६ ॥
क्वगतोऽस्यद्य पुत्रत्वं किमपूर्वं त्वयापुनः। तत्रदृष्टं श्रुतं पुण्यं तन्मे कथय
कुञ्जलस्य पितुर्वाक्यं समाकर्ण्य सउज्ज्वलः। पितरंप्रत्युवाचाथ भक्त्या न
प्रणाममकरोन्मूर्ध्ना कथांचक्रे मनोहराम् ॥ ४९ ॥

उज्ज्वल उवाच।

प्लक्षद्वीपं महाभाग नित्यमेव व्रजाम्यहम्। महता उद्यमेनापि आहारार्थं महा
प्लक्षेद्वीपे महाराज सन्तिदेशा अनेकशः। पर्वताःसरिदुद्यानवनानि च स

...श्च पत्तनाश्चान्ये सुप्रजाभिःप्रमोदिताः । सदासुखेन सन्तुष्टा लोकाहृष्टावसन्ति ते
दानपुण्य जपोपेताःश्रद्धाभाव समन्विताः ।
प्लक्षद्वीपे महाराज आसीत्पुण्यमतिःसदा ॥ ५३ ॥
...दासस्तु धर्मात्मा तत्सुतासीदनूपमा । गुणरूपसमायुक्ता सुशीला चारुमङ्गला ॥
दिव्यादेवीतिविख्याता रूपेणाप्रतिमा भुवि ।
पित्रा विलोकिता सा तु रूपलावण्यसंयुता ॥ ५५ ॥
...वयसि सा च वर्त्तते चारुमङ्गला । स तां दृष्ट्वा दिवोदासोदिव्यादेवीं सुतांतदा
...प्रदीयते कन्या सुवराय महात्मने । इति चिन्तापरो भूत्वा समालोक्य नरोत्तमः
रूपदेशस्य राजानं समालोक्य महीपतिः ।
चित्रसेनं महात्मानं समाहूय नरोत्तमः ॥ ५८ ॥
...ां ददौ महात्मासौ चित्रसेनाय धीमते । तस्याविवाहकाले तु सम्प्राप्ते समये नृप
...सौ चित्रसेनस्तुकालधर्मेणवै किल । दिवोदासस्तु धर्मात्माचिन्तयामासभूपतिः
सुब्राह्मणान्समाहूय पप्रच्छ नृपनन्दनः ।
अस्याविवाहकाले तु चित्रसेनो दिवंगतः ॥ ६१ ॥
अस्यास्तु कीदृशं कर्म भविष्यति वदन्तु मे ॥ ६२ ॥

ब्राह्मणाउचुः ।

...हो दृश्यते राजन्कन्यायास्तुविधानतः । पतिर्मृत्युंप्रयात्यस्या नोचेत्सङ्गंकरोतिच
महाधिव्याधिनाग्रस्तस्त्यागंकृत्वा प्रयाति च ।
प्रव्राजितो भवेद्राजन्धर्मशास्त्रेषु दृश्यते ॥ ६४ ॥
...ाहितायाःकन्याया उद्वाहःक्रियते बुधैः । नस्याद्रजस्वलायावदन्यःपतिर्विधीयते ॥
...हं तु विधानेन पिताकुर्यान्नसंशयः । एवं राजन्समादिष्टं धर्मशास्त्रं बुधैर्जनैः ॥
विवाहःक्रियतामस्या इत्यूचुस्ते द्विजोत्तमाः ।
दिवोदासस्तु धर्मात्मा द्विजवाक्य प्रणोदितः ॥ ६७ ॥
...ाहार्थं महाराज उद्यमं कृतवान्नृप । पुनर्दत्ता तु दानेन दिव्यादेवी द्विजोत्तम ॥६८॥

रूपसेनाय पुण्याय तस्मैराज्ञे महात्मने । मृत्युधर्मं गतो राजा विवाहे तु
यदायदा महाभाग दिव्यादेव्याश्च भूपतिः । भर्ता च म्रियतेकाले प्राप्तेलग्न

एकविंशति भर्तारःकालेकालेमृताःपितः ।
ततो राजा महादुःखी सञ्जातःख्यातविक्रमः ॥ ७१ ॥

समालोच्य समाहूय समामन्त्र्य समन्त्रिभिः । स्वयंवरे महाबुद्धिं चकार पृ
प्लक्षद्वीपस्य राजानःसमाहूता महात्मना । स्वयंवरार्थमाहूतास्तथा ते धर्म
तस्यास्तु रूपसंमुग्धा राजानोमृत्युनोदिताः । सङ्ग्रामं चक्रिरे मूढास्तेमृता

एवं तात क्षयोजातःक्षत्त्रियाणां महात्मनाम् ।
दिव्यादेवी सुदुःखार्ता गता सा वनकन्दरम् ॥ ७५ ॥

रुरोद करुणंबाला दिव्यादेवी मनस्विनी । एवं तात मयादृष्टमपूर्वं तत्र वै

तन्मे सुविस्तरं तात तस्याःकथय कारणम् ॥ ७७ ॥

इति श्री पाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थेच्यवनोपाख्
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

## षडशीतितमोऽध्यायः

### कुञ्जलेनतस्यादिव्यादेव्याःपूर्वजन्माचरितदुष्कर्मकथनम् ।

कुञ्जल उवाच ।

तस्यास्तु चेष्टितं वत्स दिव्यादेव्या वदाम्यहम् । पूर्वजन्मकृतं सर्वं तन्मे नि
अस्ति वाराणसी पुण्या नगरीपापनाशिनी । तस्यामास्तेमहाप्राज्ञःसुवीरो

वैश्यजात्यां समुत्पन्नो धनधान्य समाकुलः ।
तस्यभार्या महाप्राज्ञ चित्रानाम सुविश्रुता ॥ ३ ॥

कुलाचारं परित्यज्य अनाचारेण वर्तते । न मन्यते हि भर्तारं स्वैरवृत्त्याप्रव

पुण्यविहीना तु पापमेव समाचरेत् । भर्तारं कुत्सते नित्यं नित्यं च कलहप्रिया ॥
त्यं परगृहेवासो रमते सा गृहेगृहे । परच्छिद्रं समापश्येत्सदादुष्टा च प्राणिषु ॥६॥

साधुनिन्दा परादुष्टा सदाहास्यकरी च सा ।
अनाचारां महापापां ज्ञात्वा वीरोऽपि नन्दनः ॥ ७ ॥

तां त्यक्त्वा महाप्राज्ञ उपयेमे महामतिः । अन्यवैश्यस्य वै कन्यां तयासह प्रवर्तते
चारेण पुण्यात्मा सत्यधर्मरतिःसदा । निरस्ता तेन साचित्राप्रचण्डा भ्रमतेमहीम्
णां सङ्गति प्राप्ता नराणां पापिनां सदा । दूतीकर्म चकाराथ सा तेषां पापनिश्चया

गृहभङ्गं चकाराथ साधूनां पापकारिणी ।
साध्वीं नारीं समाहूय पापवाक्यैःसुलोभयेत् ॥ ११ ॥

मभङ्गं चकाराथवाक्यैःप्रत्ययकारकैः । साधूनां सास्त्रियंचित्राअन्यस्मै प्रतिपादयेत्
गृह शतंभग्नं चित्रया पापनिश्चयात् । सङ्ग्रामं सा महादुष्टाऽकारयत्पतिपुत्रकैः

मनांसि चालयेत्पापां पुरुषाणां स्त्रियःप्रति ।
अकारयच्च सङ्ग्रामं यमग्राम विवर्धनम् ॥ १४ ॥

गृहशतं भङ्क्त्वा पश्चात्सा निधनंगता । शासिता यमराजेन बहुदण्डैःसुनन्दन ॥
भोजयत्सुनरकान्रौरवांस्तरणेःसुतः । पाचितारौ रवेचित्रा चित्राःपीडाःप्रदर्शिताः ॥

यादृशं क्रियतेकर्म तादृशं परिभुज्यते ।
तया गृहशते भग्नं चित्रया पापनिश्चयात् ॥ १७ ॥

कर्मविपाकोऽयं तयाभुक्तो द्विजोत्तम । यस्माद्गृहशतं भग्नं तस्माद्दुःखं प्रभुञ्जति
वाहसमये प्राप्ते दैवं च पाकतां गतम् । प्राप्ते विवाहसमये भर्तामृत्युं प्रयाति च ॥

यथा गृहशतंभग्नं तथा वरशतं मृतम् ।
स्वयंवरे तदा वत्स विवाहे चैकविंशतिः ॥ २० ॥
दिव्यादेव्या मयाख्यातं यथा मे पृच्छितं त्वया ।
एतत्ते सर्वमाख्यातं तस्याःपूर्वविचेष्टितम् ॥ २१ ॥



उज्ज्वल उवाच ।

दिव्यादेव्यास्त्वयाख्यातं यत्पूर्वपूर्वचेष्टितम् ।
तथा पापं कृतं घोरं गृहभङ्गाख्यमेव च ॥ २२ ॥

प्लक्षद्वीपस्य भूपस्य दिवोदासस्य वै सुता । केनपुण्यप्रभावेण तयाप्राप्तं महाकु
एष मे संशयस्तात तदेतत्प्रब्रवीतु मे । एवं पापसमाचारा कथंजाता नृपात्मजा

कुञ्जल उवाच ।

चित्रायाश्चेष्टितंपुण्यं तत्सर्वं प्रवदाम्यहम् । श्रूयतामुज्ज्वलसुत चित्रया यत्कृ

भ्रममाणो महाप्राज्ञःकश्चित्सिद्धःसमागतः ।
कुचैलो वस्त्रहीनश्च संन्यासी स च दण्डधृक् ॥ २६ ॥

कौपीनेन समायुक्तःपाणीपात्रो दिगम्बरः । गृहद्वारं समाश्रित्य चित्रायाः परि
समौनी सर्वमुण्डस्तु विजितात्मा जितेन्द्रियः । निराहारो जिताहारः सर्वतत्त्वार्थ
दूराध्वानपरिश्रान्त आतपा कुलमानसः । श्रमेण खिद्यमानश्च तृषाकान्तः सु

चित्राद्वारं समाश्रित्य च्छायामाश्रित्य संस्थितः ।

तयादृष्टो महात्मा स चित्रया श्रमपीड़ितः । सेवां चक्रे च चित्रा सा तस्यैवसुम
पादप्रक्षालनं कृत्वा दत्वा आसनमुत्तमम् । आस्यतामासने तात सुखेनापि सु
क्षुधापनोदनार्थं हि भुज्यतामन्नमुत्तमम् । स्वेच्छया परितुष्टश्च शीतलं सलि
एवमुक्त्वा तथाकृत्वा देववत्पूज्य तं सुत । अङ्गसंवाहनंकृत्वा नाशितश्रम

तयोक्तो हि महात्मा स भुक्त्वा पीत्वा द्विजोत्तम ॥ ३४ ॥
एवं सन्तोषितःसिद्धस्तया तत्वार्थदर्शकः ॥
सन्तुष्टः सर्वधर्मात्मा किंचित्कालं स्थिरोऽभवत् ॥ ३५ ॥
स्वेच्छाया स गतो विप्रो महायोगी यथागतम् ॥

गते तस्मिन्महाभागे सिद्धेचैव महात्मनी । सा चित्रा मरणं प्राप्ता स्वकर्मवश
शासीता धर्मराजेन महादण्डैः सुदुःखदै । सा चित्रा नरकंप्राप्ता वेदनात्रातद
भुङ्क्तेदुःखंमहाराज सा वै युग सहस्रकम् । भोगान्ते तु पुनर्जन्म सम्प्राप्तं माद
पूर्वं सम्पूजितः सिद्धस्तया पुण्यवतांवरः । तस्य कर्मविपाकोऽयं प्राप्ता पुण्यव

...णां महाराज्ञो दिवोदासस्य वै गृहे । दिव्यादेवीवरापत्यं सञ्जातं तस्य मानद
...दत्तवतीचान्नं पानंपुण्यं महात्मने । तस्यदानस्य सा भुङ्क्ते महत्पुण्यफलोदयम्
...शीतलंतोयं मिष्टान्नं च भुनक्ति वै । दिव्यान्भोगान्प्रभुञ्जाना_वर्तते पितृमन्दिरे
...स्यास्य प्रभावाच्च राजकन्या व्यजायत । पापकर्मप्रभावाच्च गृहभङ्गान्महामते
...ात्वं भुञ्जते सा दिव्यादेवी सुपुत्रक । एतत्ते सर्वमाख्यातं दिव्यादेव्या विचेष्टितम्
अन्यत्किं ते प्रवक्ष्यामि यत्त्वं पृच्छसि मामहि ॥ ४५ ॥

उज्जल उवाच

कथं सामुच्यते शोकान्महादुःखाद्वदस्व मे ।
सास्याच्च कीदृशी बाला महादुःखेन पीड़िता ॥ ४६ ॥
...कीदृशं तस्माद्विपाकश्च भविष्यति । एतं मे संशयंतात साम्प्रतंछेत्तुमर्हसि ॥
...सा लभते मोक्षं तं चोपायं वदस्व मे । एकाकिनी महाभागा महारणे प्रयोदिति

विष्णुरुवाच ।

...वयं महच्छ्रुत्वा क्षणमेकं विचिन्त्यसः । प्रत्युवाच महाप्राज्ञः कुञ्जलः पुत्रकंप्रति॥
...त्स महाभाग सत्यमेतद्वदाम्यहम् । पापयोनिं तु सम्प्राप्य पूर्वकर्म समुद्भवाम्॥
...त्वेन च मे ज्ञानं नष्टं सम्प्रतिपुत्रक । अस्यवृक्षस्य सङ्गाश्च प्रयतस्य महात्मनः ॥
रेवायाश्च प्रसादेन विष्णोश्चैव प्रसादतः ॥
येन सा लभते ज्ञानं मोक्षस्थानं निवर्तते ॥ ५२ ॥
उपदेशं प्रवक्ष्यामि मोक्षमार्गमनुत्तमम् ॥
यास्यते कल्मषान्मुक्ता यथाहेम हुताशनात् ॥ ५३ ॥
...जायते वत्स सङ्गाद्वह्नेःस्वरूपवत् । हरेर्ध्यानान्महाप्राज्ञ शीघ्रं तस्य महात्मनः ॥
जपहोमव्रतात्पापं नाशंयाति हि पापिनाम् ॥
मदंत्यजेद्यथा नागो भयात्सिंहस्य सर्वदा ॥ ५५ ॥
नामोच्चारेण कृष्णस्य तत्प्रयाति हि किल्विषम् ।
तेजसा वैनतेयस्य विषहीना इवोरगाः ॥ ५६ ॥

ब्रह्महत्यादिकाःपापाःप्रलयं यान्ति नान्यथा ।
नामोच्चारेण तस्यापि चक्रपाणेः प्रयान्ति ते ॥ ५७ ॥
यद्‌नाम शतंपुण्यमघराशि विनाशनम् ॥
सा जपेतस्थिराभूत्वा कामक्रोधविवर्जिता ॥ ५८ ॥
सर्वेन्द्रियाणि संयम्य आत्मज्ञानेन गोपयेत् । तस्यध्यान प्रविष्टा सा एकभूता
सा जपेत्परमंज्ञानं तदामोक्षं प्रयाति च ।
तन्मनास्तत्पदेलीना योगयुक्ता यदा भवेत् ॥ ६० ॥

उज्ज्वल उवाच ।

वद तात परंज्ञानं परमं मम साम्प्रतम् । पश्चाद्ध्यानं व्रतं पुण्यं नाम्नां शत

कुञ्जल वाच

परंज्ञानं प्रवक्ष्यामी यन्नदृष्टं तु केनचित् । श्रूयतां पुत्रकैवल्यं केवलं मलवर्जि
यथादीपो निवातस्थो निश्चलो वायुवर्जितः । प्रज्वलन्नाशयेत्सर्वमन्धकारं
तद्वद्दोषविहीनात्मा भवत्येव निराश्रयः । निराशो निर्मलोवत्स न मित्र न रि
न शोको न च हर्षश्च न लोभो न च मत्सरः । एकोविषादहर्षैश्च सुखदुःखै
विषयैश्चापि सर्वैश्च इन्द्रियाणि स संहरेत् । तदा स केवलो जातः केवलत्वं
अग्निकर्मप्रसङ्गेन दीपस्तैलं प्रशोषयेत् ।
वर्त्याधारेण राजेन्द्र निःसङ्गोवायुवर्जितः ॥ ६७ ॥
कज्जलं वमते पश्चात्तैलस्यापि महामते । कृष्णासौ दृश्यते रेखा दीपस्याग्रे
स्वयमाकृष्यते तैलं तेजसा निर्मलो भवेत् ।
कायवर्तिस्थितस्तद्वत्कर्मतैलं प्रशोषयेत् ॥ ६९ ॥
विषयान्कज्जलीकृत्य प्रत्यक्षं सम्प्रदर्शयेत् । जनयेन्निर्मलो भूत्वा स्वयमेव
क्रोधादिभिःक्लेशसंज्ञैर्वायुभिःपरिवर्जितः ।
निःस्पृहो निश्चलो भूत्वा तेजसा स्वयमुज्ज्वलेत् ॥ ७१ ॥
त्रैलोक्यं पश्यते सर्वं स्वस्थानस्थःस्वतेजसा ।

केवल ज्ञानरूपोऽयं मया ते परिकीर्तितः ॥ ७२ ॥

नं तस्य प्रवक्ष्यामि द्विविधं तस्य चक्रिणः । केवल ज्ञानरुपेण दृश्यते ज्ञान चक्षुषा

योगयुक्ता महात्मानः परमार्थपरायणः ।

यं पश्यन्ति विनिद्रास्तु यत्तपःसर्वदर्शकम् ॥ ७४ ॥

हस्तपादविहीनश्च सर्वत्र परिगच्छति ।

सर्वं गृह्णाति त्रैलोक्यं स्थावरंजङ्गमं सुत ॥ ७५ ॥

ामुखविहीनस्तु घ्रातिजक्षिति पुत्रक । अकर्णःश्रृणुते: सर्वं सर्वसाक्षी जगत्पतिः

थरूपोरुपसम्बद्धः पञ्चवर्ग वशंगतः ।

सर्वलोकस्य यःप्राणःपूजितःसचराचरैः ॥ ७७ ॥

िह्वो वदते सर्वं वेदशास्त्रानुगं सुतः । अत्वचःस्पर्शनंचापि सर्वेषामेव जायते ॥

ानन्दो विरक्तात्मा एकरूपो निराश्रयः । निर्जरोनिर्ममोन्यायी सगुणोनिर्ममोऽमलः

श्यःसर्ववश्यात्मासर्वदःसर्ववित्तमः । तस्य ध्याता न चैवास्ति सर्वे सर्वमयो विभुः

एवं सर्वमयंध्यानं पश्यते यो महात्मनः ।

स याति परमंस्थानममूर्तममृतोपमम् ॥ ८१ ॥

द्वितीयं तु प्रवक्ष्यामि अस्य ध्यानं महात्मनः ।

मूर्ताकारं तु साकारं निराकारं निरामयम् ॥ ८२ ॥

ण्डं सर्वमतुलं वासितं यस्य वासना । स तस्माद्वासुदेवेतिः उच्यते ममनन्दन ॥

ाणस्य मेघस्य यद्वर्णं तस्यतद्भवेत् । सूर्यतेजःप्रतीकाशं चतुर्बाहुं सुरेश्वरम् ॥

णे शोभते शङ्खो हेमरत्नविभूषितः । सूर्यबिम्बसमाकारं चक्रं पद्मं प्रतिष्ठितम् ॥

कौमोदकीगदा तस्य महासुर विनाशिनी ।

वामे च शोभते वत्स हस्ते तस्य महात्मनः ॥ ८६ ॥

पद्मं सुगन्धाढ्यं तस्य दक्षिण हस्तगम् । शोभमानःसदैवास्ते सायुधःकमलाप्रियः

ुग्रीवं वृत्तमास्यं पद्मपत्रनिभेक्षणम् । राजमानं हृषीकेशं दशनै रत्नसन्निभैः ॥८८॥

ाकेशाःसन्ति यस्य अधरो विद्रुमाकृतिः । शोभते पुण्डरीकाक्षः किरीटेनापिपुत्रक

विशालेनापि रूपेण केशवस्तु सुवर्चसा।
कौस्तुभेनाङ्कितेनैव राजमानो जनार्दनः॥ ६०॥
सूर्यतेजःप्रतीकाश कुण्डलाभ्यां प्रभाति च। श्रीवत्साङ्केन पुण्येन सर्वदा राजते
केयूरकङ्कणैर्हारैर्मौक्तिकैर्ऋक्षसन्निभैः। वपुषा भ्राजमानस्तु विजयो जयतांवर
भ्राजते सोऽपि गोविन्दो हेमवर्णेन वाससा।
मुद्रिका रत्नयुक्ताभिरङ्गुलिभिर्विराजते॥ ६३।
सर्वायुधैःसुसम्पूर्णैर्दिव्यैराभरणैर्हरिः। वैनतेय समारूढो लोककर्ता जग
एवं तं ध्यायते नित्यमनन्यमनसा नरः। मुच्यते सर्वपापेभ्यो रुद्रलोकं स
एतत्ते सर्वमाख्यातं ध्यानमेव जगत्पतेः।
व्रतंचैव प्रवक्ष्यामि सर्वपाप निवारणम्॥ ६६॥
इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डे वेनोपाख्यानेगुरुतीर्थवर्णनेषडशीतितमो

——————

# सप्ताशीतितमोऽध्यायः

## अशून्यशयनव्रतकथनम्।

कुञ्जलउवाच।

व्रतभेदान्प्रवक्ष्यामि यैर्यैश्चाराधितो हरिः। जया च विजयाचैव जयन्ती पाप
त्रिस्पृशावञ्जुलीचान्या तिलदग्धा तथापरा। अखण्डाचारकन्या च मनोरथ
दिव्यप्रभावाःसन्त्यन्यास्तिथयःपुत्रपौत्रदाः। अशून्यशयनं चान्यज्जन्माष्टमी
एतैर्व्रतैर्महापुण्यैःपापं दूरं प्रयाति च।
प्राणिनां नात्रसन्देह सत्यं सत्यं वदाम्यहम्॥ ४॥
स्तोत्रं तस्य प्रवक्ष्यामिपापराशि विनाशनम्। सुपुत्र शतनामाख्यं नराणां
तस्य देवस्य कृष्णस्य शतनामाख्यमुत्तमम्। सम्प्रत्येव प्रवक्ष्यामि तच्छृणु

विष्णोर्नामशतस्यापि ऋषिंछन्दो वदाम्यहम् ।
देवंचैव महाभाग सर्वपाप विशोधनम् ॥ ७ ॥
ष्णोर्नामशतस्यापिऋषिर्ब्रह्मा प्रकीर्तितः । विष्णुस्तु देवताप्रोक्तश्छन्दोऽनुष्टुतथैव च
सर्वकामिक संसिद्ध्यै मोक्षे च विनियोगकः ॥ ८ ॥
यहं हृषीकेशं केशवं मधुसूदनम् । सूदनं सर्वदैत्यानां नारायणमनामयम् ॥ ९ ॥
जयन्तं विजयं कृष्णमनन्तं वामनं ततः ।
विष्णुं विश्वेश्वरं पुण्यं विश्वाधारं सुरार्चितम् ॥ १० ॥
त्वघहन्तारं नरसिंहं श्रियःप्रियम् । श्रीपतिं श्रीधरं श्रीदं श्रीनिवासं महोदयम् ॥
पं माधवंमोक्षं क्षमारूपं जनार्दनम् । सर्वज्ञं सर्ववेत्तारं सर्वदं सर्वनायकम् ॥
मुरारिंगोविन्दं पद्मनाभं प्रजापतिम् । आनन्दं ज्ञानसम्पन्नं ज्ञानदं ज्ञाननायकम् ॥
तं सबलं चन्द्रं चक्रपाणिं परावरम् । युगाधारं जगद्योनिं ब्रह्मरूपं महेश्वरम् ॥
दं तं सुवैकुण्ठमेकरूपं जगत्पतिम् । वासुदेवं महात्मानं ब्रह्मण्यं ब्राह्मणप्रियम् ॥
गोप्रियं गोहितं यज्ञं यज्ञाङ्गं यज्ञवर्द्धनम् ।
यज्ञस्यापि सुभोक्तारं वेदवेदाङ्गपारगम् ॥ १६ ॥
वेदरूपं तं विद्यावासं सुरेश्वरम् । अव्यक्तं तं महाहंसं शङ्खपाणिं पुरातनम्॥१७॥
पुष्कराक्षं तु वराहं धरणीधरम् । प्रद्युम्नं कामपालं च व्यासं व्यालमहेश्वरम् ॥
सर्वसौख्यं महासौख्यं मोक्षं च परमेश्वरम् ।
योगरूपं महाज्ञानं योगिनां गतिदं प्रियम् ॥ १९ ॥
लोकपालं तं पद्महस्तं गदाधरम् । गुहावासं सर्ववासं पुण्यवासं महाभुजम् ॥
नमामि निश्चलं नित्यं मनोवाक्काय कर्मभिः ॥ २१ ॥
नाम्नां शतेनापि सुपुण्य कर्ता यःस्तौति कृष्ण मनसास्थिरेण ।
सयाति लोकं मधुसूदनस्य विहाय लोकोनिहपुण्यपूतः ॥ २२ ॥
शतं महापुण्यं सर्वपातकशोधनम् । जपेदनन्यमनसा ध्यायेद्ध्यान समन्वितम् ॥
मेव नरःपुण्यैर्गङ्गास्नानफलं लभेत् । तस्मात्तु सुस्थिरोभूत्वा समाहित मनाजपेत्

त्रिकालं च जपेन्मर्त्यो नियतो नियमेस्थितः। अश्वमेधफलं तस्य जायते ना

एकादश्यामुपोष्यैव पुरतो माधवस्य यः।

जागरे प्रजपेन्मर्त्यस्तस्यपुण्यं वदाम्यहम्॥ २६॥

पुण्डरीकस्य यज्ञस्य फलमाप्नोति मानवः।

तुलसी सन्निधौस्थित्वा मनसा यो जपेन्नरः॥ २७॥

राजसूय फलंभुङ्क्ते वर्षेणापि च मानवः। शालग्रामशिला यत्र यत्र द्वारावर्ति

उभयोः सन्निधौ जाप्यं कर्त्तव्यं सुखमिच्छता। बहुसौख्यं प्रभुक्त्वैव कुलानां

एकेनचाधिकं मर्त्य आत्मनासह तारयेत्। कार्तिके स्नानकर्ता यःपूजयेन्मधुसू

यःपठेत्प्रयतःस्तोत्रं प्रयाति परमांगतिम्।

माघस्नायी हरिंपूज्य भक्त्या च मधुसूदनम्॥ ३१॥

ध्यायेच्चैव हृषीकेशं जपेद्वाथ श्रृणोति वा। सुरापानादिकं पापं विहाय परं

विनाविघ्नं नरः पुत्र सम्प्रयाति जनार्दनम्। श्राद्धकाले हि यो मर्त्यो विप्राणांभुञ्

यो जपेच्च शतंनाम्नां स्तोत्रं पातकनाशनम्।

पितरस्तुष्टिमायान्ति तृप्तायान्ति परांगतिम्॥ ३४॥

ब्रह्मणो वेदविद्वान्स्यात्क्षत्रियोविन्दते महीम्। धनऋद्धिं प्रभुञ्जीत वैश्यो जपनि

शूद्रःसुखं प्रभुङ्क्तेऽथ ब्राह्मणत्वं च गच्छति।

प्राप्यजन्मान्तरं वत्स वेदविद्यां प्रविन्दति॥ ३६॥

सुखदं मोक्षदं स्तोत्रं जप्तव्यं च न संशयः। केशवस्य प्रसादेन सर्वसिद्धो भ

इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थवर्णनेच्यवनचरि

सप्ताशीतितमोऽध्यायः॥ ८७॥

———

# अष्टाशीतितमोऽध्यायः

## प्लक्षद्वीपंगत्वाउज्ज्वलस्यदिव्यादेवींप्रतिपित्रुद्दिष्टव्रतस्तोत्रादिकथनम्

कुञ्जल उवाच ।

स्तोत्रं महाज्ञानं ध्यानंच्चैव सुपुत्रक । मयाख्यातं तवाग्रे वै विष्णोःपापप्रणाशनम्
पुण्यं सा हि यदापुण्यं समाचरेत् । प्रयाति वैष्णवंलोकं देवानामपि दुर्लभम्
त्वा व्रतं वत्स दिव्यादेवीं प्रबोधय । अशून्यशयनंनाम व्रतराजं वदस्वताम् ॥३॥

समुद्धर महापापाद्राजकन्यां यशस्विनीम् ।
त्वयापृष्टं मयाख्यातं पुण्यदं पापनाशनम् ॥ ४ ॥
गच्छगच्छ महाभाग इत्युक्त्वा विरराम सः ॥ ५ ॥

श्रीविष्णुरुवाच ।

ऽप्येव मुक्तस्तु सपित्रा कुञ्जलेनहि । प्रणम्य पादौ धर्मात्मा मातापित्रोर्महामति
त्वरितो राजन्प्लक्षद्वीपं सउज्ज्वलः । तं गिरिं सर्वतोभद्रं नानाधातु समाकुलम्
नानारत्नमयैस्तुङ्गैः शिखरैरुपशोभितम् ।
नानाप्रवाह सम्पूर्णैरुदकैरुज्ज्वलैर्नृप ॥ ८ ॥

न्ति स्वच्छनीरास्तस्मिन्गिरिवरोत्तमे । किन्नरास्तत्रगायन्ति गन्धर्वाःसुस्वरैर्नृप
भिःसमाकीर्णं देववृन्दैरुपावृतम् । सिद्धचारणसङ्घुष्टं मुनिवृन्दैरलङ्कृतम् ॥
नानापक्षिनिनादैश्च सर्वत्र परिनादितम् ।
एवंगिरिं समासाद्य उज्ज्वलोऽलघुविक्रमः ॥ ११ ॥

णापि सा कन्या गिरौतस्मिन्प्ररोदिति । रोरूयमाणां सप्राज्ञोवचनं चेदमब्रवीत्
का त्वं भवसि कल्याणि कस्माद्रोदिषि साम्प्रतम् ।
ता महाभागे केन ते विप्रियं कृतम् । समाचक्ष्व ममाद्यैव सर्वंदुःखस्य कारणम्



दिव्यादेव्युवाच ।

विपाको हि महाभाग कर्मणां मम साम्प्रतम् । इहतिष्ठामि दुःखेन वैधव्येन स
भवान्को हि महाभाग कृपया ममपीडितः । पक्षिरूपधरो वत्स सोत्सवं परि

एवमाकर्ण्य तत्सर्वं भाषितं राजकन्यया ।
अहंपक्षी महाभागे कृपया तवपीडितः ॥ १६ ॥

पक्षिरूपधरो भद्रे नाहंसिद्धो न ज्ञानवान् । रुदमानां महालापैर्भवतींदृष्टवानिह
ततःपृच्छाम्यहं देवि वद मे कारणंत्विह । पितुर्गेहे यथावृत्तमात्मवृत्तान्तं

तया निवेदितं सर्वं यथासङ्ख्येन दुःखदम् ।
समासेन समाकर्ण्य उज्ज्वलस्तु महामनाः ॥ १९ ॥

तामुवाच महापक्षी दिव्यादेवीं सुदुःखिताम् । यथा विवाहकाले ते भर्तारो म
स्वयंवर निमित्तं ते क्षयंयाताश्च क्षत्रियाः । एतत्ते चेष्टितंसर्वं मयापितरि श्रु

अन्यजन्मकृतं कर्म तवपापं सुलोचने ।
ममपित्रा ममाग्रे तु कृपया परिभाषितम् ॥ २२ ॥

तेनदोषेण सम्पुष्टा लिप्ताजाता वरानने । एतावत्कारणं सर्वं तातेन परिभा

पूर्वकर्म विपाकं तु भुङ्क्ष्वत्वं च समाश्व स ।
एवं सा भाषितं तस्य श्रुत्वा कन्योज्ज्वलस्य तत् ॥ २४ ॥

प्रत्युवाच महात्मानं ब्रुवन्तं पक्षिणं पुनः । प्रणता दीनया वाचा कुरुपक्षिन्
कथयस्व प्रसादेन तस्यपापस्य निष्कृतिम् । प्रायश्चित्तं सुपुण्यं च ममपातक

येन व्रजाम्यहं पुण्यं विशुद्धा धौतकल्मषा ।
प्रायश्चितं महाभाग वद मे त्वं प्रसादतः ॥ २७ ॥

उज्ज्वल उवाच ।

तवार्थं तु महाभागे पितरं पृष्टवानहम् । समाख्यातमतःपित्रा प्रायश्चित्तम
तत्त्वं कुरु महाभागे सर्वपातकशोधनम् । ध्यायस्व हि हृषीकेशं शतनाम ज
भव ज्ञान परानित्यं कुरु व्रतमनुत्तमम् । अशून्यशयनं पुण्यं व्रतं पाप प्र



समाचष्ट सधर्मात्मा सर्वज्ञानप्रकाशकम् ।

ज्ञानस्तोत्रं व्रतं ध्यानं विष्णोश्चैव महात्मनः ॥ ३१ ॥

विष्णुरुवाच ।

त्सा हि प्रजग्राह संस्थिता निर्जनेवने । सर्वद्वन्द्वविनिर्मुक्ता सञ्जाता तपसिस्थिता
के जिताहारा निराधारा सुदुःखिता । कामक्रोधविहीना सा वर्गंसंयम्य नित्यशः
इन्द्रियाणां महाराज महामोहं निरस्य सा ।
अब्दे चतुर्थकेप्राप्ते सुप्रसन्नो जनार्दनः ॥ ३४ ॥
वरंदातुकामश्चायातो वरनायकः । तस्यै सन्दर्शयामास स्वरूपं वरदःप्रभुः ॥
ल घनश्याम शङ्खचक्रगदाधरम् । सर्वाभरणशोभाढ्यं पद्महस्तं महेश्वरम् ॥३६॥
वद्धाञ्जलिपुटाभूत्वा वेपमाना निराश्रया ॥
उवाच गद्गदैर्वाक्यैः प्रणता मधुसूदनम् ॥ ३७ ॥
तवदिव्येन स्थातुं शक्नोमि नैव हि । दिव्यरूपो भवेःकस्त्वं कृपया ममचाग्रतः
व प्रसादेन किमत्र तवकारणम् । सर्वमेव प्रसादेन प्रव्रवीहि महामते ॥ ३९ ॥
विजानामि तेजसा इङ्गीतैस्तव । ज्ञानहीना जगन्नाथ न जाने रूपनामनी ॥
किं व्रह्मा वा भवान्विष्णुःकिं वा शङ्कर एव हि ।
एवमुक्त्वा प्रणम्यैवं दण्डवद्धरणींगता ॥ ४१ ॥
तामुवाच जगन्नाथःप्रणतां राजनन्दिनीम् ॥ ४२ ॥

श्रीभगवानुवाच ।

मपि देवानामन्तरंनास्ति शोभने । व्रह्मा समर्चितो येन शङ्करो वा वरानने ॥
तेनाहमर्चितो नित्यं नात्रकार्या विचारणा ।
एतौ ममाभिन्नतरौ नित्यंचापि त्रिरूपवान् ॥ ४४ ॥
पूजितोयैश्च तावेतौ तैःसुपूजितौ । अहंदेवो हृषीकेशःकृपया तवचागतः ॥ ४५॥
नेन पुण्येन व्रतेन नियमेन च । सञ्जाता कल्मषैर्हीना वरं वरय शोभने ॥ ४६ ॥

दिव्यादेव्युवाच ।

स हृषीकेश कृष्ण क्लेशापहारक । नमामि चरणद्वन्द्वं मामुद्धर सुरेश्वरम्॥४७॥

वरं मे दातुकामोऽसि चक्रपाणे प्रसीद मे। आत्मपादयुगस्यापि भक्तिर्देहि म
दर्शयस्व जगन्नाथ मोक्षमार्गं निरामयम्॥
दासत्वं देहि वैकुण्ठ यदितुष्टो जनार्दन॥ ४६॥
श्रीभगवानुवाच।
एवमस्तु महाभागे गच्छ निर्धूतकल्मषा। वैष्णवं परमंलोकं दुर्लभं योगि
गच्छगच्छ परंलोकं प्रसादान्मम साम्प्रतम्। एवमुक्ते ततोवाक्ये माधवेन म
दिव्यादेवी अभूद्दिव्या सूर्यतेजःसमप्रभा।
पश्यतां सर्वलोकानां दिव्याभरणभूषिता॥ ५२॥
दिव्यमालान्विता सा च दिव्यहारविलम्बिनी। गता सा वैष्णवंलोकंदाहप्रल
पुनःपक्षी समायातःस्वगृहं हर्षसंयुतः। तत्सर्वं कथयामास पितरंप्रति सन
इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थेच्यवनचरि
ऽष्टाशीतितमोऽध्यायः॥ ८८॥

---

## एकोननवतितमोऽध्यायः

### समुज्ज्वलेननर्मदातीरेव्याधोद्धारपूर्वककृष्णहंसकथावर्णनम्।

विष्णुरुवाच।
कुञ्जलस्तु सुतंवाक्यं समुज्ज्वलमथाब्रवीत्। भवान्कथय भोःपुत्र किमपूर्वं
तन्मे कथय सुप्रीतःश्रोतुकामोऽस्मि साम्प्रतम्। एवमादिश्य तं पुत्रं विरराम
पितरं प्रत्युवाचाथ विनयावनतस्सुतः॥ ३॥
समुज्ज्वल उवाच।
हिमवन्तं नगश्रेष्ठं देववृन्द समन्वितम्। आहारार्थं प्रगच्छामि भवतश्चाज्ञ
पश्यामि कौतुकं तत्र न दृष्टं न श्रुतं पुरा। प्रदेशमृषिभिःकीर्णमप्सरोभिः

कौतुकशोभाढ्यं मङ्गल्यं, मङ्गलैर्युतम् । बहुपुण्यफलोपेतैर्वनैर्नानाविधैस्ततः ॥६॥
कौतुकभरैर्मनसःपरिमोहनम् । तत्र दृष्टं मया तातं अपूर्वं मानसान्तिके ॥ ७ ॥
हंसैःसमाकीर्णो हंस एकःसमागतः । स च कृष्णो महाभाग त्रयोऽप्यन्येसमागताः
इतरैश्च चञ्चुपादैरन्यतःशुक्लविग्रहाः । तादृशास्ते च नीला वै अन्येशुभ्रा महामते ॥
स्तत्र वै नार्यो रौद्राकाराविभीषणाः । दंष्ट्राकराल सङ्क्रूरा ऊर्ध्वकेश्योभयानकाः

पश्चात्तास्तु समायातास्तस्मिन्सरसि मानसे ।
कृष्णाहंसास्तु संस्नाता मानसे तातमत्पुरः ॥ ११ ॥
विभ्रान्ताःपरितश्चान्ये न स्नातास्तत्र मानसे ।
कृष्णान्हंसास्तु संस्नाताश्चहसुस्ताःस्त्रियस्तदो ॥ १२ ॥
तस्मात्तडागान्निष्क्रान्तो हंसएको महातनुः ।
पश्चात्त्रयो विनिष्क्रान्तास्तैश्चाहं समुपेक्षितः ॥ १३ ॥

आकाशमार्गेण विवदन्तःपरस्परम् । तास्तु स्त्रियो महाभीमाःसमन्तात्परिवभ्रमुः

विन्ध्यस्य शिखरे पुण्ये वृक्षच्छाया सुपक्षिणः ।
निषण्णास्तत्र ते सर्वे दग्धादुःखैःसुदारुणैः ॥१५॥

सुवीक्षमाणानां भिल्लएकःसमागतः । मृगान्सपीडयित्वा तु बाणपाणिर्धनुर्द्धरः
तलं समाश्रित्य निषसाद सुखेन वै । पश्चाद्भिल्ली समायाता अन्नमादाय सोदकम्

स्वयंप्रियं वीक्षते राज्ञा मुदितैर्लक्षणैर्युतम् ।
अन्यादृशं समावीक्ष्य स्वकान्तं तेजसावृतम् ॥ १८ ॥

तेजःसमाक्रान्तं यथासूर्य दिविस्थितम् । नरमन्यं परिज्ञाय तं परित्यज्य सा ययौ

व्याध उवाच ।

एह्येहि त्वं प्रियेचात्र कस्मान्मां त्वं न पश्यसि ।
क्षुधया पीड्यमानोऽहं त्वामहं चावलोकये ॥ २० ॥
तस्यवाक्यं समाकर्ण्य शीघ्रंव्याधी समागता ।
भर्तुःपार्श्वं समासाद्य विस्मिता सा भवत्तदा ॥ २१ ॥

कोऽयं तेजःसमाचारो देवोऽयं मां समाह्वयेत् । तमुवाच ततोव्याधी भर्तारं

अत्र किं ते कृतं वीर भवान्को दिव्यलक्षणः ॥ २२ ॥

समुज्ज्वल उवाच ।

एवमाभाषितो व्याध्याव्याधःप्रियामभाषत । अहं ते वल्लभःकान्ते भवती च मम

कस्मात्त्वं मां न जानासि कथंशङ्का प्रवर्तते । क्षुधया पीड्यमानेन पयश्चान्नं

व्याध्युवाच ।

बर्बरःकृष्णवर्णश्च रक्ताक्षःकृष्णकञ्चुकः । ईदृशश्चास्ति मे भर्ता सर्वसत्त्वभ

भवान्को दिव्यदेहस्तु प्रियेत्युक्त्वा समाह्वयेत् ।

एष मे संशयोजातो वदसत्यं ममाग्रतः ॥ २६ ॥

कुलंनाम स्वकंग्रामं क्रीडांलिङ्गं सुतंसुताम् । समाचष्ट प्रियाग्रे तु तस्याःप्रत्य

प्रत्युवाच स्वभर्तारं साव्याधी हृष्टमानसा । कस्मात्ते ईदृशःकायःश्वेतकञ्चुक

कथंजातःसमाचक्ष्व ममाश्चर्यं प्रवर्तते ॥ २९ ॥

समुज्ज्वल उवाच ।

एवं सम्पृच्छमानस्तु भार्यया मृगघातकः ।

प्रत्युवाच ततः श्रुत्वा तां प्रियां प्रश्रयान्विताम् ॥ ३० ॥

नर्मदा उत्तरेकूले सङ्गमश्चास्ति सुव्रते । आतपेनाकुलोजीवो ममजातोऽति

अस्मिन्वै सङ्गमे कान्ते श्रमश्रान्तो हि सत्वरः ।

गतःस्नात्वा जलंपीत्वा पश्चाच्चाहं समागतः ॥ ३२ ॥

तदा प्रभृति मे काय ईदृशस्तेजसावृतः । सञ्जातो वस्त्रसंयुक्तः कञ्चुकःशुभ्र

पूर्वोक्तलिङ्गसंस्थानैःकुलैःस्थानेन वै तथा ।

स्वप्रियं लक्षयित्वा तु ज्ञात्वा पुण्यस्य सम्भवम् ॥ ३४ ॥

प्रत्युवाचाथ भर्तारं सङ्गमं ममदर्शय । तव पश्चात्प्रदास्यामि भोजनं पान

इत्युक्तःप्रियया व्याधःसत्वरेण जगाम ह । सङ्गमो दर्शितस्तेन ततोऽग्रे पाप



समुड्डीना महाभाग पक्षिणो लघु विक्रमाः । तयासार्द्धं ययुःसर्वे रेवासङ्गम

तेषां तु वीक्षमाणानां पक्षिणां ममपश्यतः ।
तया हि स्नापितो भर्ता पुनःस्नाता हि सा स्वयम् ॥ ३८ ॥
दिव्यदेहधरौचोभौ दिव्यकान्तिसमन्वितौ । सञ्जातौ पक्षिणांश्रेष्ठ दिव्यवस्त्रानुलेपनौ
दिव्यमालाम्बरधरौ दिव्यगन्धानुलेपनौ । वैष्णवं यानमासाद्य मुनिगन्धर्वपूजितौ ॥
गतौ वैष्णवंलोकं वैष्णवैःपरिपूजितौ । स्तूयमानौ महात्मानौ दम्पती दृष्टवानहम्
गतौ स्वर्गमार्गेण कूजन्ते पक्षिणस्तथा । तीर्थराजं परंदृष्ट्वा हर्षव्यक्ताक्षरैस्तदा ॥
चत्वारःकृष्णहंसास्ते सङ्गमे पापनाशने ।
स्नात्वा वै भावशुद्धास्ते प्राप्ता उज्ज्वलतां पुनः ॥४३॥
स्नात्वा पीत्वा जलं ते तु पुनर्बहिर्विनिर्गताः ।
तावत्यस्ताः स्त्रियःकृष्णा मृतास्तत्स्नानमात्रतः ॥४४॥
...माना विचेष्टन्त्यो हाहाकारविकम्पिताः । यमलोकं गतास्तास्तु तातदृष्टा मयातदा
...तास्तु ततो हंसाःस्वस्थानं प्रतिजग्मिरे । एवं तात मयादृष्टं प्रत्यक्षं कथितं तव ॥
कृष्णपक्षा महाकाया धार्तराष्ट्रास्तु तास्त्रियः ।
कथयस्व प्रसादेन के भविष्यन्ति वै पितः ॥ ४७ ॥
निर्गतान्मानसान्मध्याद्धार्तराष्ट्रान्वदस्व मे ।
के भविष्यन्ति ते तात कथयत्वं तु साम्प्रतम् ॥४८॥
कस्मात्सुकृष्णतां प्राप्ता हंसाःशुद्धाश्च ते पुनः ।
सञ्जातास्तत्क्षणात्तात कस्मान्मृतास्तु ताःस्त्रियः ॥४९॥
...मे संशयस्तात सञ्जातो दारुणो हृदि । छेत्तुमर्हसि अद्यैव भवान्ज्ञानविचक्षणः ॥
...द सुमुखोभूत्वा प्रणतस्य सदैव मे । एवं सम्भाष्य पितरं विरराम समुज्ज्वलः ॥
ततःप्रवक्तुमारेभे सशुकःकुञ्जलाभिधः ॥५१॥
इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थवर्णनेच्यवनचरित्रे
एकोननवतितमोऽध्यायः ॥८९॥



———

# नवतितमोऽध्यायः

## कुञ्जलेनकृष्णहंसकथानकावसरेतीर्थचरित्रवर्णनम् ।

विष्णुरुवाच ।

एवमाकर्ण्य तत्सर्वं समुज्ज्वलस्यभाषितम् । कुञ्जलःस हि धर्मात्माप्रत्युवाच सु

कुञ्जलउवाच ।

सम्प्रवक्ष्याम्यहं तात श्रूयतां स्थिरमानसः ।
सर्वसन्देह विध्वंसं चरित्रं पापनाशनम् ॥ २ ॥

इन्द्रलोके प्रववृते संवादो देवकौतुकः । सभायां तस्यदेवस्य इन्द्रस्यापि मह
देवंद्रष्टुं सहस्राक्षं नारदस्त्वरितं ययौ । समागतं सहस्राक्षःसूर्यतेजःसमप्रभ
तं दृष्ट्वा हर्षमायातःसमुत्थाय महामतिः । ददावर्घं च पाद्यं च भक्त्या प्र
बद्धाञ्जलि पुटोभूत्वा प्रणाममकरोत्तदा । आसने कोमले पुण्ये विनिवेश्य द्वि
पप्रच्छ प्रणतोभूत्वा श्रद्धयापरयायुतः । कस्मच्चागमनं तेद्य कारणं वद स

इत्युक्तो देवराजेन प्रत्युवाच महामुनिः ।
भवन्तं द्रष्टुमायातःपृथिव्यास्तु पुरन्दर ॥ ८ ॥

स्नात्वा पुण्यप्रदेशेषु तीर्थेषुच सुश्रद्धया । देवान्पितॄन्समभ्यर्च्य दृष्ट्वा तीर्था
एतत्ते सर्वमाख्यातं यत्त्वया पृच्छितं पुरा ॥ १० ॥

देवेन्द्र उवाच ।

दृष्टानि पुण्यतीर्थानि सुक्षेत्राणि त्वयामुने । किंतीर्थं प्राप्यमुच्येत ब्रह्मघ्नो ब्र
सुरापो मुच्यते पापाद्गोघ्नो हेमापहारकः । स्वामीद्रोहान्महाभाग नारीहन्ता

नारद उवाच

यानिकानि च तीर्थानि गयादीनि सुरेश्वर । तेषांनैव प्रजानामि विशेषं पाप

सुपुण्यानि सुदिव्यानि पापघ्नानि समानि च ।

सर्वाण्येव सुतीर्थानि जानाम्यहं पुरन्दर ॥ १४ ॥
शेषं विशेषं वै नैवजानामि साम्प्रतम् । प्रत्ययं क्रियतां देव तीर्थानां गतिदायकम्
आकर्ण्य तद्वाक्यं नारदस्य महात्मनः । समाहूतानि चेन्द्रेण तीर्थानि भूगतानि च
मूर्तिमन्ति च दिव्यानि समायातानि शासनात् ।
बद्धाञ्जलीनिदिव्यानि भूषितानि सुभूषणः ॥ १७ ॥
दिव्याम्बराणि स्निग्धानि तेजोवन्ति च सुव्रत ।
स्त्रीपुंसोश्च स्वरूपाणि कृतानि च विशेषतः ॥ १८ ॥
न्द्र प्रकाशानि दिव्यरूपधराणि च । मुक्ताफलस्य वर्णेन प्रभासन्ते नरेश्वर ॥
काञ्चनवर्णानि सारुण्यानि च तत्रवै । कान्त्या शुक्लसुपीतानिप्रभावन्ति सभान्तरे
ि पद्मनिभान्येव मूर्तिमन्ति च तानि तु । सूर्यतेजःप्रकाशानि तडित्तेजःसमानि च
काभानि चान्यानि प्रभासन्ते सभान्तरे । सर्वाभरणशोभाढ्यैःप्रशोभन्ते नरेश्वर ॥
कङ्कणकेयूर मालाभिस्तु सुचन्दनैः । दिव्यचन्दनदिग्धानि सुरभीणि गुरूणि च ॥
कमण्डलुकराण्येव आयातानि सभान्तरे ।
गङ्गा च नर्मदापुण्या चन्द्रभागा सरस्वती ॥ २४ ॥
देविका बिम्बिका कुब्जा कुञ्जलामञ्जुला श्रुता ।
रम्भा भानुमतीपुण्या पाराचैव सुघर्घरा ॥ २५ ॥
ा च सिन्धुसौवीरा कावेरी कपिलातथा । कुमुदा वेदनदीपुण्यासुपुण्याचमहेश्वरी
वती तथाख्याता लोपाचान्या सुकौशिकी । सुहंसी हंसपादा च हंसवेगामनोरथा
ा स्वारुणावेगा भद्रवेणासुपद्मिनी । वाहिनीसरय्वाचान्यापुण्याचान्यापुलिन्दिका
हेमामनोरथा दिव्या चन्द्रिका वेदसङ्क्रमा ।
ज्वालाहुताशनी स्वाहा कालाचैव कपिञ्जला ॥ २६ ॥
ा सुकाल कालिङ्गा गम्भीरा हिमवाहिनी । देवद्रीची वीरवाहालक्षहोमा अघापहा
मरीहेमगर्भा सुभद्रावसुपुत्रिका । एतानद्यो महापुण्या मूर्तिमत्यो नरेश्वर ॥३१॥
सरणशोभाढ्याःकुम्भहस्ताःसुपूजिताः । प्रयागःपुष्करश्चैव सर्वतीर्थमनोरमः ॥

वाराणसी महापुण्या ब्रह्महत्याव्यपोहिनी ।
द्वारावती प्रभासश्च अवन्ती नैमिषस्तथा ॥ ३३ ॥
चण्डकश्च महारत्नो महेश्वर कलेश्वरौ । कलिञ्जरो ब्रह्मक्षेत्रं माथुरो
मायाकान्ती तथान्यानि दिव्यानि विविधानि च ।
अष्टषष्टिःसुतीर्थानि नदीनां शतकोटयः ॥ ३५ ॥
गोदावरीमुखाःसर्वाःसमायातास्तदाज्ञया ।
द्वीपानां तु समस्तानि सुतीर्थानि महान्ति च ॥ ३६ ॥
मूर्तिलिङ्गधराण्येव सहस्राक्षं सुरेश्वरम् । समाजग्मुःसमस्तानि तदादेशक
प्रणेमुर्देवदेवेशं नतशीर्षाणि सर्वशः । तैः प्रोक्तं तु महातीर्थैर्देवराजस्तु
कस्मात्त्वया समाहूता देवदेव वदस्व नः ।
ब्रूहि नःकारणंसर्वं नमस्तुभ्यं वराधिपः ॥ ३९ ॥
एवमाकर्ण्यतद्वाक्यं देवराजोऽभ्यभाषत । कःसमर्थो महातीर्थो ब्रह्महत्यां
गोवधाख्यं महापापं स्त्रीवधाख्यमनुत्तमम् ।
स्वामीद्रोहाच्च सम्भूतं सुरापानाच्चदारुणम् ॥ ४१ ॥
हेमस्तेयात्तथाजातं गुरुनिन्दा समुद्भवम् । भ्रूणहत्यां महाघोरां कःसमर्थो
राजद्रोहान्महापापं बहुपीडाप्रदायकम् । मित्रद्रोहात्तथाचान्यदन्यद्विश्वास
देवभेदं तथाचान्यं लिङ्गभेदमतःपरम् ।
वृत्तिच्छेदं च विप्राणां गोप्रचार प्रणाशनम् ॥ ४४ ॥
आगारदहनं चान्यद् गृहदीपनकं तथा । षोडशैते महापापा अगम्यागमनं त
स्वामीत्यागात्समुद्भूतं रणस्थानात्पलायनात् ।
एतानि नाशयेत्को वै समर्थस्तीर्थउत्तमः ॥ ४६ ॥
समर्थो भवतांमध्ये प्रायश्चित्तं विनाध्रुवम् । पश्यतां देवतानां च नारदस्य
ब्रुवन्तु सर्वे सञ्चिन्त्य विचार्यैवं सुनिश्चितम् । एवमुक्ते शुभेवाक्ये देवराज
समन्त्र्य तीर्थराजेन प्रोचुःशक्रं सभागतम् ॥ ४८ ॥

तीर्थान्यूचुः ।

तामभिधायामो देवराज नमोऽस्तुते । सन्ति वै सर्वतीर्थानि सर्वपापहराणि च ॥
हत्यादिकान्यांश्च त्वयाप्रोक्तान्सुरेश्वर । महाघोरान्सुदीप्तांश्च नाशितुंनैवशक्नुमः ॥
गः पुष्करश्चैव अर्घतीर्थमनुत्तमम् । वाराणसी महाभाग समर्थापापनाशिनी ॥५१॥
पातकनाशार्थे चत्वारोऽमितविक्रमाः । उपपातकनाशार्थं चत्वारोऽमितविक्रमाः ॥
सृष्टाधात्रा च देवेन्द्र पुष्कराद्या महाबलाः ।
एवमाकर्ण्य तद्वाक्यं तीर्थानां सुरराट् ततः ॥ ५३ ॥
हर्षेण महताविष्टस्तेषांस्तोत्रं चकार सः ॥ ५४ ॥

इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थमाहात्म्येच्यवनचरित्रे
नवतितमोऽध्यायः ॥ ९० ॥

---

## एकनवतितमोऽध्यायः

ब्रह्महत्याऽगम्यागम्यदोषदूषितस्यशक्रस्यवाराणस्यादितीर्थेषुस्नानम् ।

कुञ्जल उवाच ।

हत्याभिभूतस्तु सहस्राक्षो यदापुरा । गौतमस्य प्रियासङ्गादगदाम्यागमनं महत् ॥
सञ्जातं पातकं तस्य त्यक्तोदेवैश्च ब्राह्मणैः ।
सहस्राक्षस्तपस्तेपे निरालम्बो निराश्रयः ॥ २ ॥
न्ते देवताःसर्वा ऋषयो यक्षकिन्नराः । देवराजस्य पूजार्थमभिषेकं प्रचक्रिरे ॥
मालवकं नीत्वा देवराजं सुतोत्तम । चक्रेस्नानं महाभाग कुम्भैरुदकपूरितैः ॥ ४ ॥
पितुं प्रथमं नीतो वाराणास्यां स्वयं ततः । प्रयागे तु सहस्राक्ष अर्घतीर्थे ततःपुनः
पुष्करेण महात्माऽसौ स्नापितःस्वयमेव हि ।
ब्रह्मादिभिःसुरैःसर्वैर्मुनिवृन्दैर्द्विजोत्तम ॥ ६ ॥

नागैर्वृक्षैर्नागसर्पैर्गन्धर्वैस्तु सकिन्नरैः। स्नापितो देवराजस्तु वेदमन्त्रैःसुसं
मुनिभिःसर्वपापघ्नै तस्मिन्काले द्विजोत्तम।
शुद्धे तस्मिन्महाभागे सहस्राक्षे महात्मनि ॥ ८॥
ब्रह्महत्यागता तस्य अगम्यागमनं तथा। ब्रह्महत्या ततो नष्टा अगम्यागमनेन च
पापेन तेन घोरेण सार्द्धमिन्द्रस्य भूतले। सुप्रसन्नःसहस्राक्षस्तीर्थेभ्यो हि वरं
भवन्तस्तीर्थराजानो भविष्यथ न संशयः। मत्प्रसादात्पवित्राश्च, यस्मादहं कि
सुघोरात्किल्बिषादत्र युष्माभिर्विमलैरहम्।
एवं तेभ्यो वरंदत्त्वा मालवाय वरं ददौ ॥ १२॥
यस्मात्त्वयामलं मेऽद्य विधूतं श्रमदायकम्। तस्मात्त्वमन्नपानैश्च धनधान्यैरल
भविष्यसि न सन्देहो मत्प्रसादन्न संशयः।
सुदुष्कालैर्विना त्वं तु भविष्यसि सुपुण्यवान् ॥ १४॥
एवंतस्मै वरंदत्त्वा देवराजःपुरन्दरः। क्षेत्राणि सर्वतीर्थानि देशोमालवक
आखण्डलेन सार्द्धं ते स्वस्थानं प्रतिजग्मिरे। तदाप्रभृति चत्वारःप्रयागःपुष्क
वाराणसी चार्घतीर्थं प्राप्ता राजत्वमुत्तमम् ॥ १७॥
अस्ति पञ्चालदेशेषु विदुरोनाम क्षत्रियः। तेन मोहप्रसङ्गेन ब्राह्मणो निहतःपु
शिखासूत्रविहानस्तु तिलकेन विवर्जितः। भिक्षार्थमटतेसोऽपि ब्रह्मघ्नोऽहं स
ब्रह्मघ्नाय सुरोपाय भिक्षाचान्नं प्रदीयताम्। गृहेष्वेवं समस्तेषु भ्रमते याव
एवं सर्वेषु तीर्थेषु अटित्वैव समागतः।
ब्रह्महत्या न तस्यापि प्रयाति द्विजसत्तम ॥ २१॥
वृक्षच्छायां समाश्रित्य दह्यमानेन चेतसा। संस्थितोविदुरःपापो दुःखशोक
चन्द्रशर्मा ततोविप्रो महामोहेन पीडितः। न्यवसन्मागधेदेशे गुरुघातकश्च
स्वजनैर्बन्धुवर्गैश्च परित्यक्तोदुरात्मवान्। स हि तत्र समायातोयत्रासौ विदु
शिखासूत्रविहीनस्तु विप्रलिङ्गैर्विवर्जितः।
तदासौ पृच्छितस्तेन विदुरेण दुरात्मना ॥ २५॥

भवान्को हि समायातो दुर्भगो दग्धमानसः ।
विप्रलिङ्गविहीनस्तु कस्मात्त्वं भ्रमसे महीम् ॥ २६ ॥
ेणोक्त मात्रस्तु चन्द्रशर्मा द्विजाधमः । आचष्टे सर्वमेवापि यथापूर्वकृतं स्वकम् ॥
ं च महाघोरं वसता च गुरोर्गृहे । महामोहगतेनापि क्रोधेनाकुलितेन च॥ २८ ॥
गुरोर्घातःकृतःपूर्वं तेनदग्धोऽस्मि साम्प्रतम् ।
चन्द्रशर्मा न वृत्तान्तमुक्त्वा सर्वमपृच्छत ॥ २९ ॥
भवान्को हि सुदुःखात्मा वृक्षच्छायां समाश्रितः ।
विदुरेण समासेन आत्मपापं निवेदितम् ॥ ३० ॥
श्चिद् द्विजःप्राप्तस्तृतीयःश्रमकर्षितः । वेदशर्मेति वै नाम बहुपातकसञ्चयः ॥३१॥
द्वाभ्यामपि सुसम्पृष्टःकोभवान्दुःखिताकृतिः ।
कस्माद् भ्रमसि वै पृथ्वीं यद्भावं त्वमात्मनः ॥ ३२ ॥
र्मा ततःसर्वमात्मचेष्टितमेव च । कथयामास ताभ्यां वै ह्यगम्यागमनं कृतम् ॥
तःसर्वलोकैश्च अन्यैःस्वजनबान्धवैः । तेन पापेन सँल्लिप्तो भ्रमाम्येवं महीमिमाम्
लोनाम वैश्योऽथ सुरापायी समागतः । सगोत्नश्च विशेषेण तैश्च पृष्टो यथापुरा
तेन आवेदितं सर्वं पातकं यत्पुराकृतम् ।
तैराकर्णितमन्यैश्च सर्वं तस्य प्रभाषितम् ॥ ३६ ॥
चत्वारःपापिष्ठा एकस्थानं समागताः । कःकस्यापि न सम्पर्कं भोजनाच्छादनेनच
ति च महाभाग वार्तां चक्रुःपरस्परम् । न विशन्त्यासनेचैके न स्वपन्त्येक संस्तरे
दुःखसमाविष्टा नानातीर्थेषु वै गताः । तेषां तु पापकाघोरा न नश्यन्ति च नन्दन
सामर्थ्यंनास्ति तीर्थानां महापातकनाशने ।
विदुराद्यास्ततस्ते तु गताःकालञ्जरं गिरिम् ॥ ४० ॥
इति श्रीपाद्मपुराणे द्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थेच्यवनचरित्रे

एकनवतितमोऽध्यायः ।

# द्विनवतितमोऽध्यायः

कस्यचित्सिद्धस्योपदेशेनैतेषांचतुर्णां वाराणस्यादितीर्थेषुस्नानान्मुक्ति

कुञ्जल उवाच ।

कालञ्जरं समासाद्य निवसन्ति सुदुःखिताः । महापापैस्तु सन्दग्धा हाहाभूता

तत्र कश्चित्समायातःसिद्धश्चैव महायशाः । तेन पृष्टाःसुदुःखार्ता भवन्तःके

· स तैःप्रोक्तो महाप्राज्ञःसर्वज्ञानविशारदः ।
तेषां ज्ञात्वा महापापं कृपांचक्रे सुपुण्यभाक् ॥ ३ ॥

सिद्ध उवाच ।

अमासोम समायोगे प्रयागःपुष्करश्च यः । अर्घतीर्थं तृतीयं तु वाराणसी

गच्छन्तु तत्र वै यूयं चत्वारःपातकाविलाः । गङ्गाम्भसियदास्नातास्तदामुक्ता

पातकेभ्यो न सन्देहो निर्मलत्वं गमिष्यथ ।
आदिष्टास्तेन वै सर्वे प्रणेमुस्तं प्रयत्नतः ॥ ६ ॥
कालञ्जरात्ततो जग्मुःसत्वरं पापपीडिताः ।
वाराणसीं समासाद्य स्नात्वाचैव द्विजोत्तमाः ॥ ७ ॥

प्रयागं पुष्करंश्चैव अर्घतीर्थं तु सत्तम । अमासोमं सुसम्प्राप्य जग्मुस्ते च

विदुरश्चन्द्रशर्मा च वेदशर्मा तृतीयकः । वैश्यो वञ्जुलकश्चैव सुरापःपापके

तस्मिन्पर्वणि सम्प्राप्ते स्नाता गङ्गाम्भसि द्विज ।
स्नानमात्रेण मुक्तास्तु गोवधाद्यैश्च किल्बिषैः ॥ १० ॥

ब्रह्महत्या गुरुहत्यासुरापानादि पातकैः । लिप्तानितानि तीर्थानि परिभ्रमन्ति

पुष्करश्चार्घतीर्थस्तु प्रयागःपापनाशनः । वाराणसी चतुर्थी तु लिप्ता पापै

कृष्णत्वं पेदिरे सर्वे हंसरूपेण बभ्रमुः । सर्वेष्वेव सुतीर्थेषु स्नानं चक्रुर्द्वि



कृष्णत्वं नैवगच्छेत तेषां पापेन चागतम् ।

सुतीर्थेषु महाराज स्नाताःसर्वेषु वै पुनः ॥ १४ ॥

तीर्थं प्रयान्त्येते सर्वेतीर्था द्विजोत्तम । हंसरूपेण वै यान्ति तैःसार्द्धं सुदुःखिताः

पातकरूपाश्च भ्रमन्ति परितस्तथा । अष्टषष्टि सुतीर्थानि हंसरूपेण बभ्रमुः ॥

द्धं सुमहाराज महातीर्थैःसमं पुनः । मानसं चागतास्ते च पातका कुलमानसाः ॥

तत्रस्नाता महाराज न जहाति च पातकः ।

लज्जयाविष्ट मनसा मानसो हंसरूपधृक् ॥ १८ ॥

सञ्जातःकृष्णकायस्तु यं त्वं वै दृष्टवान्पुरा ।

रेवातीरं ततोजग्मुरुत्तरं पापनाशनम् ॥ १९ ॥

याःसङ्गमे ते तु सुरसिद्ध निषेविते । स्नानमात्रेण मुक्तास्ते पापेभ्यो द्विजसत्तम

विहाय वर्णमेवैतं शुद्धत्वं प्रतिजग्मिरे ।

यं यं तीर्थं प्रयान्ते ते हंसाःस्नानं प्रचक्रमुः ॥ २१ ॥

ताःस्त्रियो दृष्ट्वा पातकंनैव गच्छति । तोयानलेन कुब्जायाःपातकं वरमेत्र च

शेषं सञ्जातं तदामृतास्तु ताःस्त्रियः । ब्रह्महत्या गुरोर्हत्या सुरापानागमागमाः

भस्मीभूतास्तु सञ्जाता रेवायाःकुब्जया हताः ।

तास्तुहता महाभाग या मृतास्तु सरित्तटे ॥ २४ ॥

सुतीर्थानां हंसरूपेण तानि तु । सार्द्धं हंसःसमायातो विद्धितं त्वत्तु मानसम्

कृष्णहंसाश्च तेषां नामानि मे शृणु । प्रयागःपुष्करश्चैव अर्घतीर्थमनुत्तमम् ॥

वाराणसी चतुर्थी च चत्वारःपापनाशनाः ।

ब्रह्महत्याभिभूतानि चत्वारि परिबभ्रमुः ॥ २७ ॥

तानि दुःखेन तीर्थेषु च महामते । न गतं पातकंघोरं तेषां तु भ्रमतां सुतः ॥

ाःसङ्गमेशुद्धा विमुक्ताःकिल्विषात्किल । तीर्थानामेव सर्वेषांपुण्यानामिहसंमतः

राजाप्रयागःसञ्जात इन्द्रस्य पुरतःकिल ।

तावद्गर्जन्तु तीर्थानि यावद्रेवा न दृश्यते ॥ ३० ॥

दि पापानां विनाशाय प्रतिष्ठिता । कपिलासङ्गमे पुण्ये रेवायाःसङ्गमे तथा ॥

मेघनाद समायोगे तथाचैवोरुसङ्गमे । महापुण्या महाधन्या रेवासर्वत्र
साचोङ्कारे भृगुक्षेत्रे नर्मदाकुब्जसङ्गमे । दुष्प्राप्या मानवैरेवा माहिष्मत्यां
विटङ्कासङ्गमे पुण्या श्रीकण्ठे सङ्गलेश्वरे ।
सर्वत्रदुर्लभा रेवा सुरपुण्य समाकुला ॥ ३४ ॥
तीर्थमाता महादेवी अघराशि विनाशिनी । उभयोःकूलयोर्मध्ये यत्र तत्र
अश्वमेध फलंभुङ्क्ते स्नानेनैकेन मानवः । एतत्ते सर्वमाख्यातं यत्त्वया परिपृ
सर्वपापापहं पुण्यं गतिदंचापि शृण्वताम् ।
एवमुक्त्वा महाप्राज्ञ तृतीयं पुत्रमब्रवीत् ॥ ३७ ॥
इतिश्री पाद्मपुराणे द्वितीयेभूमिखण्डे वेनोपाख्यानेगुरुतीर्थेच्यवनच
द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

## त्रिनवतितमोऽध्यायः

आनन्दकाननेकस्यचित्सिद्धस्यसपत्नीकस्यनिजनिजशवमांसभक्षणचमत्
कुञ्जल उवाच ।
किं विज्वल त्वया दृष्टमपूर्वं भ्रमतोमहीम् । आश्चर्येण समायुक्तं तन्मे कथ
इतःप्रयासिकं देशमाहारार्थं तु सोद्यमः । यद्दृष्टं त्वयाचित्रं समाख्याहि
विज्वल उवाच ।
अस्ति मेरुगिरेःपृष्ठे आनन्दंनाम काननम् । दिव्यवृक्षैःसमाकीर्णं फलपुष्प
देववृन्दैःसमाकीर्णं मुनिसिद्धसमन्वितम् । अप्सरोभिःसुरूपाभिर्गन्धर्वैः
वापीकूपतडागैश्च नदीप्रस्रवणैस्तथा । आनन्दकाननंपुण्यं दिव्यभावैःप्रभा
विमानैःकोटिसङ्ख्यैश्च हंसकुन्देन्दुसन्निभैः ।
गीतकोलाहलैरम्यैर्मेघध्वनि निनादितम् ॥ ६ ॥

...नां निनादेन सर्वत्र मधुरायते । चन्दनैश्चूतवृक्षैश्च चम्पकैःपुष्पितैर्वृतम् ॥ ७ ॥
...वृक्षैःप्रभात्येवमानन्दवनमुत्तमम् । नानापक्षिनिनादेन वहुकोलाहलान्वितम् ॥ ८ ॥
...नन्दनं दृष्टं मयातत्र सुशोभनम् । विमलं च सरस्तात शोभते सागरोपमम् ॥
...र्णं पुण्यतोयेन पद्मसौगन्धिकैःशुभैः। जलजैस्तु समाकीर्णं हंसकारण्डवान्वितम्
...सीत्सरस्तस्य सुमध्ये काननस्य हि । देवगन्धर्व सम्बाधैर्मुनिवृन्दैरलङ्कृतम्
...रोरगगन्धर्वैश्चारणैश्च सुशोभते । तत्राश्चर्यं मयादृष्टं वक्तुं तात न शक्यते॥ १२ ॥
...नेनापि दिव्येन कलशैरुपशोभते । छत्रदण्डपताकाभि राजमानेन सत्तम ॥ १३ ॥
सर्वभोगाविलेनापि गीयमानेऽथ किन्नरैः ।
गन्धर्वैरप्सरोभिश्च शोभमानोऽथ सुव्रत ॥ १४ ॥
...नो महासिद्ध ऋषिभिस्तत्त्ववेदिभिः । रूपेणाप्रतिमोलोके न दृष्टस्तादृशःक्वचित्
...रणशोभाङ्गो दिव्यमाला विशोभितः । महारत्न कृतामाला यस्योरसि विराजते
...पे स्थिताचैका नारीदृष्टा वरानना । हेमहारैश्च मुक्तानां वलयैःकङ्कणैर्युता ॥
दिव्यवस्त्रैश्च गन्धैश्च चन्दनैश्चारुलेपनैः ।
स्तूयमानो गीयमानःपुरुषस्तत्र चागतः ॥ १८ ॥
...ा वरारोहा पीनश्रोणि पयोधरा । सर्वाभरणशोभाङ्गी तादृशी रूपसम्पदा ॥
...ौ तौ मयादृष्टौ विमानेनापि चागतौ । रूपलावण्यमाधुर्यौ सर्वशोभासमाविलौ
समुत्तीर्णौ विमानात्तावागतौ सरसोऽन्तिके ।
स्नातौतात महात्मानौ स्त्रीपुंसौ कमलेक्षणौ ॥ २१ ॥
...तौ महाशक्तौ दम्पती तु परस्परम् । तादृशौ च शवौ तत्र पतितौ सरसस्तटे ॥
...ते तदा तौ तु स्त्रीपुंसौ कमलेक्षणौ । रूपेणापि महाभाग तादृशावेव तौ शवौ
...पमस्तात यथा पुंसस्तथा शवः । यथारूपं हि तस्यापि तादृशस्तत्र दृश्यते ॥
यथारूपं तु भार्यायास्तथा शवो द्वितीयकः ।
स्त्रीशवस्य तु यन्मांसं शस्त्रेणोत्कृत्य सा ततः ॥ २५ ॥
...स्य मांसानि रक्ताप्लुतानि तानि तु । पुरुषो भक्षते तद्वच्छवमांसं समातुरः ॥

क्षुधया पीड्यमानौतौ भक्षेतेपिशितं तयोः। यावत्तृप्तिं सम्प्रायातौ तावन्मांसं प्र
सरस्यथ जलंपीत्वा सञ्जातौ सुखितौ पितः। कियत्कालंस्थितौतत्रविमानेन

अन्येद्वे तु स्त्रियौ तात मयादृष्टे च तत्र वै।
रूपसौभाग्यसम्पन्ने ते स्त्रियौ चारुलक्षणे ॥ २६ ॥

ताभ्यां प्रभुक्षितं मांसं यदा तात महावने। प्रहसे ते तदा ते द्वे हास्यैरट्टहृ
भक्षेतेच स्वमांसानि तावेतौ परिनित्यशः। कृत्वास्नानादिकं मांसं पश्यतो मम तात

अन्येस्त्रियौ महाभाग रौद्राकार समन्विते।
दंष्ट्राकरालवदने तत्रैवाति विभीषणे ॥ ३२ ॥

ऊचतुस्तौ तदाते तु देहिदेहीति वै पुनः। एवंदृष्टं मया तात वसता घनसनि
नित्यमुत्कीर्यभक्ष्येते तौद्वौ तु मांसमेवच। जायेतेच सुसम्पूर्णौ कायौ च शन

नित्यमुत्तीर्यतावेवं ते चाप्यन्ये च वै पितः।
कुर्वन्ति सदृशीं चेष्टां पूर्वोक्तां मम पश्यतः ॥ ३५ ॥

एतदाश्चर्यं सञ्जातं दृष्टं तात मया तदा। भवता पृच्छितं तात दृष्टमाश्चर्यमेव व
मयाख्यातं तवाग्रे वै सर्वं सन्देहकारणम्। कथयस्व प्रसादाच्च प्रीयमाणेन
विमानेनागतो योऽसौ स्त्रियासार्द्धं द्विजोत्तम। दिव्यरूपधरोयस्तु सकस्तु क
का च नारी महाभाग महामासंप्रभक्षति। स कश्चाप्यागतस्तात साचैवाप्येत

प्रहसे ते तदा ते द्वे स्त्रियौ तात वदस्व नः।
ऊचतुस्तौ तथाचान्ये देहिदेहीति वा पुनः ॥ ४० ॥

ते द्वे त्वं मे समाचक्ष्व महाभीषणके स्त्रियौ। एतन्मे संशयं तात च्छेत्तुमर्हसि
एवमुक्त्वा महाराज विरराम स चाण्डजः। एवं पृष्टस्तृतीयेन विज्वलेनाल

प्रोवाच सर्वं वृत्तान्तं च्यवनस्यापि शृण्वतः ॥४३॥

इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थेच्यवनचरित्रे
त्रिनवतितमोऽध्यायः।

# चतुर्नवतितमोऽध्यायः

## कर्ममाहात्म्यकथनम्

कुञ्जल उवाच ।

तामभिधास्यामि तत्सर्वंकारणं सुत । यस्मातौ तादृशौ जातौ स्वमांस परिभक्षकौ
त्र कारणं कर्म शुभाशुभं न संशयः । पुण्येन कर्मणा पुत्र नरःसौख्यं प्रभुञ्जति ॥
खं भुञ्जते चात्र पापयुक्तेन कर्मणा । सूक्ष्मवर्त्म विचार्यैवं शास्त्रज्ञानेन चक्षुषा ॥
यमं प्रदृष्ट्वैव सुविचार्य पुनःपुनः । समारभेन्नरःकर्म मनसा निपुणेन च ॥ ४॥
ककारकःशिल्पी रसमावर्त्तयेद्यथा । अग्नेश्चतेजसा पुत्र ज्वालाभिश्च समन्ततः ॥
भूतो भवेद्धातुर्वह्निना तापितःशनैः । यादृशं वत्स भक्ष्यं तु रसपक्वं निषेच्यते ॥
शं जायते वत्स रूपंचैव न संशयः । यादृशं क्रियते कर्म तादृशं परिभुज्यते ॥ ७ ॥
एव प्रधानं यद्वर्षारूपेण वर्त्तते । क्षेत्रेषु यादृशं बीजं वपते कृषिकारकः ॥ ८ ॥
शं भुञ्जते तात फलमेव न संशयः । यादृशं क्रियते कर्म तादृशं परिभुज्यते ॥ ९ ॥
हेतुःकर्मास्य सर्वे कर्मवशावयम् । कर्मदायादका लोके कर्मसम्बन्धिबान्धवाः
णि चोदयन्तीह पुरुषं सुखदुःखयोः । सुवर्णंरजतंवापि यथारूपं निषिच्यते ॥
निषिच्यते जन्तु पूर्वकर्मवशानुगः । पञ्चैतानिह दृश्यन्ते गर्भस्थस्यैव देहिनः ॥
कर्म च वित्तं च विद्यानिधनमेव च । यथा मृत्पिण्डतःकर्त्ता कुरुते यद्यदिच्छति
कर्मकृतं चैव कर्त्तारं प्रतिपद्यते । देवत्वमथ मानुष्यं पशुत्वं पक्षितां तथा ॥१४॥
त्वंस्थावरत्वं वा यातिजन्तुःस्वमर्मभिः । स एव तु तथाभुङ्क्तेनित्यंविहितमात्मनः
मनाविहितं दुःखमात्मनाविहितं सुखम् । गर्भशय्यामुपादाय भुञ्जते पूर्वदेहिकम् ॥
कृतंकर्म न कश्चित्पुरुषोत्तमः । बलेन प्रज्ञयावापि समर्थःकर्तुमन्यथा ॥ १७ ॥
त्यान्येव भुञ्जन्ति दुःखानि च सुखानि च । हेतुतःकारणैर्वापि सोऽहङ्कारेण बाध्यते
धेनु सहस्रेषु वत्सो विन्दति मातरम् । तद्वच्छुभाशुभंकर्म कर्तारमनुगच्छति ॥

उपभोगादृते यस्य नाश एव न विद्यते । प्राक्तनं बन्धनंकर्म कोऽन्यथा कर्तु
सुशीघ्रमनुधावन्तं विधानमनुधावति । शोभते सन्निपातेन यथाकर्म पुराकृतम्।
उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति । करोति कुर्वतः कर्म च्छायेवानुवि
यथा छायातपौनित्यं सुसम्बद्धौ परस्परम् । उपसर्गा हि विषया उपसर्गा
पीडयन्ति नरं पश्चात्पीडितं पूर्वकर्मणा । येन यत्रोपभोक्तव्यं दुःखं वा सुखं
स तत्र बद्धारज्ज्वेव बलाद्दैवेन नीयते । दैवं प्राहुश्च भूतानां सुखदुःखोपप

अन्यथा कर्मतच्चिन्त्यं जाग्रतःस्वपतोऽपिवा ।
अन्यथा ह्युद्यतेदैवं वध्यते च जिघांसति ॥ २६ ॥

शस्त्राग्नि विषदुर्गेभ्यो रक्षितव्यं सुरक्षति । यथापृथिव्यांबीजानि वृक्षगुल्म
तथैवात्मनि कर्माणि तिष्ठन्ति प्रभवन्ति च । तैलक्षयाद्यथादीपो निर्वाणम
कर्मक्षयात्तथा जन्तोःशरीरं नाशमृच्छति । कर्मक्षयात्तथा मृत्युस्तत्त्वविद्भि

विविधाःप्राणिनां रोगःस्मृतास्तेषां च हेतवः ।
तस्मात्तत्त्व प्रधानं तु कर्मएव हि प्राणिनाम् ॥ ३० ॥

यत्पुरा क्रियते कर्म तदिहैव प्रभुज्यते । यत्त्वया दृष्टमेवापि पृच्छितं तात सा
तस्यार्थं तु मयाप्रोक्तं भुञ्जाते तौहि साम्प्रतम् । आनन्देकानने दृष्टं तयोकर्म
तयोच्चेष्टां प्रवक्ष्यामि शृणु वत्स प्रभाषतः । कर्मभूमिरियं तात अन्याभोगा
सर्गादीनां महाप्राज्ञ तासु गत्वा सुभुञ्जति । चौलदेशे महाप्राज्ञः सुबाहुर्नाम

रूपवान्गुणवान्धीरःपृथिव्यांनास्ति तादृशः ।
विष्णुभक्तो महाप्राज्ञो वैष्णवानां च सुप्रियः ॥ ३५ ॥

कर्मणा त्रिविधेनापि प्रध्यायन्मधुसूदनम् । अश्वमेधादिकान्यज्ञान्यजेत स
पुरोधास्तस्य चैवास्ति जैमिनिर्नामब्राह्मणः । स चाहूयसुबाहुं तमिदंवच
राजन्देहि सुदानानि यैः सुखं तु प्रभुज्यते । दानैस्तु तरतेलोकान्दुर्गान्प्रेत्य

दानेन सुखमाप्नोति यशःप्राप्नोति शाश्वतम् ।



दानेन चातुलाकीर्तिर्जायते मृत्युमण्डले ॥ ३६ ॥

[या]वत्कीर्तिःस्थिताचात्र तावत्कर्ता दिवं वसेत् । तद्दानं दुष्करं प्राहुर्दातुंनैव प्रशक्यते
तस्मात्सर्वप्रयत्नेन दातव्यं मानवैःसदा ॥ ४१ ॥

सुबाहुरुवाच ।

[दानस्य] तपसोवापि द्वयोर्मध्येसुदुष्करम् । किं वा महत्फलं प्रेत्य तन्मे ब्रूहि द्विजोत्तम

जैमिनिरुवाच ।

[दाना]द्दुष्करतरं पृथिव्यामस्ति किंचन । राजन्प्रत्यक्षमेवैकं दृश्यते लोकसाक्षिकम् ॥
[य]स्य प्रियान्प्राणान्धनार्थं लोभमोहिताः । प्रविशन्ति नरालोके समुद्रमटवीं तथा
[से]वये प्रपद्यन्ते श्ववृत्तिरिति यास्थिता । हिंसाप्रायां वहुक्लेशं कृषिंचैव तथा पुरा
तस्य दुःखार्जितस्यापि प्राणेभ्योपि गरीयसः ।
अर्थस्य पुरुषव्याघ्र परित्यागःसुदुष्करः ॥ ४६ ॥
[अ]तो महाराज तस्यन्यायार्जितस्य च । श्रद्धया विधिवत्पात्रे दत्तस्यान्तो न विद्यते
[ध]र्मसुता देवी पावनी विश्वतारिणी । सावित्री प्रसवित्री च संसारार्णवतारिणी
श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभीः ।
निष्किञ्चनास्तु मुनयःश्रद्धा धर्मादिवंगताः ॥ ४९ ॥
[दा]नान्यनेकानि नानाभेदैर्नृपोत्तम । अन्नदानात्परंनास्ति प्राणिनां गतिदायकम्
[अ]न्नं प्रदातव्यं पयसा च समन्वितम् । मधुरेणाक्षिपुण्येन वचसा च समन्वितम्
[अ]न्नात्तु परंदानमिहलोके परत्र च । तारणाय हितायैव सुखसम्पत्तिहेतवे ॥ ५२ ॥
[श्रद्धया] विधिवत्पात्रे निर्मलेनापि चेतसा । अन्नैकस्य प्रदानस्य फलं भुङ्क्ते निरन्तरम्
ग्रासाद्ग्रासं प्रदातव्यं मुष्टिप्रस्थं न संशयः ।
अक्षयं जायते तस्य दानस्यापि महाफलम् ॥ ५४ ॥
न च प्रस्थं न वा मुष्टिं नरस्य हि न सम्भवेत् ।
अनास्तिक्य प्रभावेण प्रर्वणि प्राप्य मानवः ॥ ५५ ॥
[एकं] ब्राह्मणंचैकं भक्त्याचैवं प्रभोजयेत् । एकस्यापि प्रधानस्य अन्नस्यापि प्रजेश्वर
[अ]क्षरं सुखसम्प्राप्य नित्यं चान्नं प्रभुञ्जति । पूर्वजन्मनि यद्दत्तं भक्त्यापात्रे सकृन्नरैः

जन्मान्तरं सुसम्प्राप्य नित्यमेव भुनक्ति च ।
अन्नदानं प्रयच्छन्ति ब्राह्मणेभ्यो हि नित्यशः ॥ ५८ ॥
मिष्टान्नपानं भुञ्जन्ति ते नरा अन्नदायिनः । अन्नमेव वदन्त्येत ऋषयो वेद...
प्राणभूतं न सन्देहममृताद्धि समुद्भवम् । प्राणास्तेन प्रदत्ता हि येनचान्नं स...
अन्नदानं महाराज देहि त्वं तु प्रयत्नतः । एवमाकर्ण्य वै राजा जैमिनेस्तु म...
पुनःपप्रच्छ तं विप्रं जैमिनिं ज्ञानपण्डितम् ॥ ६१ ॥

इति श्रीपाद्मपुराणे द्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थमहात्म्येच्यवन...
चतुर्नवतितमोऽध्यायः ।

---

## पञ्चनवतितमोऽध्यायः

### जैमिनिनास्वर्गगुणवर्णनपुरःसरंदानस्यातिश्रैष्ठ्यवर्णनम् ।

सुबाहुरुवाच ।

स्वर्गस्य मे गुणान्ब्रूहि साम्प्रतं द्विजसत्तम ।
एतत्सर्वं द्विजश्रेष्ठ करिष्यामि स्वभाविकम् ॥ १ ॥

जैमिनिरुवाच ।

नन्दनादीनि रम्याणि दिव्यानि विविधानि च ।
तत्रोद्यानानि पुण्यानि सर्वकामयुतानि च ॥ २ ॥
सर्वकामफलैर्वृक्षैःशोभनानि समन्ततः । विमानानि सुदिव्यानि सेवितान...
सर्वत्रैव विचित्राणि कामगानिवशानि च ।
तरुणादित्य वर्णानि मुक्ताजालान्तराणि च ॥ ४ ॥
चन्द्रमण्डल शुभ्राणि हेमशय्यासनानि च । सर्वकामसमृद्धाश्च सर्वदु...
नराःसुकृतिनस्तेषु विचरन्ति यथाभुवि ।

न तत्रनास्तिका सन्ति नस्तेनानाजितेन्द्रियाः ॥ ६ ॥
न नृशंसा न पिशुना न कृतघ्ना न मानिनः ।
सत्यास्तपःस्थिताःशूरा दयावन्तःक्षमापराः ॥ ७ ॥
...तो दानशीलाश्च तत्र गच्छन्ति ते नराः । नरोगो नजरा मृत्युर्न शोको न हिमातपौ
...क्षुत्पिपासा च कस्यग्लानिर्न विद्यते । एतेचान्ये च बहवो गुणाःस्वर्गस्य भूपते
दोषास्तत्रैव ये सन्ति ताञ्छृणुष्व च साम्प्रतम् ।
शुभस्य कर्मणःकृत्स्नं फलं तत्रैवभुज्यते ॥ १० ॥
न चात्र क्रियते भूयःसोऽत्र दोषो महान्स्मृतः ।
असन्तोषश्च भवति दृष्ट्वा दीप्तां परांश्रियम् ॥ ११ ॥
...मनस्कानां सहसा पतनं तथा । इह यत्क्रियते कर्म फलं तत्रैव भुज्यते॥१२॥
कर्मभूमिरियं राजन्फलभूमिरसौ स्मृता ॥ १३ ॥

सुबाहुरुवाच ।

महान्तस्तु इमेदोषास्त्वया स्वर्गस्य कीर्तिताः ।
निर्दोषाःशाश्वताये‍ऽन्ये तांस्त्वं लोकान्वदद्विज ॥ १४ ॥

जैमिनिरुवाच ।

...सदनादेव दोषाःसन्ति च वै नृप । अत एव हि नेच्छन्ति स्वर्गप्राप्तिं मनीषिणः
...सदनादूर्ध्वं तद्विष्णोःपरमंपदम् । शुभं सनातनं ज्योतिःपरंब्रह्मेति तद्विदुः ॥१६॥
...मूढा गच्छन्ति पुरुषा विषयात्मकाः । दम्भ मोहभयद्रोह क्रोधलोभैरभिद्रुताः ॥
...मानिरहङ्कारा निर्द्वन्द्वास्संयतेन्द्रियाः । ध्यानयोगरताश्चैव तत्र गच्छन्ति साधवः ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ १८ ॥

कुशल उवाच ।

...स्वर्गगुणं श्रुत्वा सुबाहुःपृथिवीपतिः । तमुवाच महात्मानं जैमिनिं वदतां वरम् ॥
...स्वर्गं गमिष्यामि न चैवेच्छाम्यहं मुने । यस्माच्च पतनं प्रोक्तंतत्कर्म न करोम्यहम्
...लोकं महाभाग नाहंदास्ये कदा ध्रुवम् । दानाच्च फललोभाच्च तस्मात्पतति वैनरः

इत्येवमुक्त्वा धर्मात्मा सुबाहुः पृथिवीपतिः ।
ध्यानयोगेन देवेशं यजिष्ये कमलाप्रियम् ॥ २२ ॥
दाहप्रलयसंवर्जं विष्णुलोकं व्रजाम्यहम् ॥ २३ ॥

जैमिनिरुवाच ।

सत्यमुक्तं त्वया भूपः सर्वश्रेयःसमाकुलम् । राजानो धर्मशीलाश्च महायज्ञैर्यजं
सर्वदानानि दीयन्ते यज्ञेषु नृपनन्दन । आदावन्नं तु यज्ञेपु वस्त्रं ताम्बूलमेव
काञ्चनं भूमिदानं च गोदानं प्रददन्ति च । सुयज्ञैर्वैष्णवंलोकं ते प्रयान्ति नरो

दानेन तृप्तिमायान्ति सन्तुष्टाःसन्ति भूमिपाः ।
तपस्विनो महात्मानो नित्यमेवं यजन्ति ते ॥ २७ ॥
सुभिक्षां याचयित्वा तु स्वस्थानं तु समोगताः ।
भिक्षार्थं तस्य भागानि प्रकुर्वन्ति च भूपते ॥ २८ ॥

ब्राह्मणाय विभागैकं गोग्रासं तु महामते । सुपार्श्ववर्तिनांचैकं प्रयच्छन्ति त

तस्यान्नस्य प्रदानेन फलं भुञ्जन्ति मानवाः ।
क्षुधातृषा विहीनास्ते विष्णुलोकं व्रजन्ति वै ॥ ३० ॥
तस्मात्वमपि राजेन्द्र देहि न्यायार्जितं धनम् ।
दानाज्ज्ञानं ततःप्राप्य ज्ञानात्सिद्धिं प्रयास्यसि ॥ ३१ ॥
य इदं श्रृणुयान्मर्त्यःपुण्याख्यानमनुत्तमम् ।
विमुक्तःसर्वपापेभ्यो विष्णुलोकं सगच्छति ॥ ३२ ॥

इति श्रीपाद्मपुराणेद्वितीये भूमिखण्डेवेनोपाख्यानेगुरुतीर्थेच्यवनचरित्रे

पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः

### नरकगामिनांस्वर्गगामिनां च वर्णनम् ।

सुबाहुरुवाच ।

कीदृशैःकर्मभिःप्रेत्य गच्छन्ति नरकं नराः । स्वर्गं तु कीदृशैःप्रेत्य तन्मे त्वं वक्तुमर्हसि

जैमिनिरुवाच ।

ब्राह्मण्यं पुण्यमुत्सृज्य ये द्विजा लोभमोहिताः ।
कुकर्माण्युपजीवन्ति ते वै निरयगामिनः ॥ २ ॥

नास्तिका भिन्नमर्यादाःकन्दर्पविषयोन्मुखाः । दाम्भिकाश्च कृतघ्नाश्च ते वै निरयगामिनः

ब्राह्मणेभ्यःप्रतिश्रुत्य न प्रयच्छन्ति ये धनम् । ब्रह्मस्वानां च हर्तारो नरा निरयगामिनः

...याः पिशुनाश्चैव मानिनोऽनृतवादिनः । असम्बद्ध प्रलापाश्च ते वै निरयगामिनः ॥

परस्वापहर्तारःपरदूषण सूचकाः । परस्त्रीगामिनो ये च ते वै निरयगामिनः ॥ ६ ॥

प्राणिनां प्राणहिंसायां ये नरा निरताःसदा ।
परनिन्दारता ये वै ते वै निरयगामिनः ॥ ॥ ७ ॥

कूपानां तडागानां प्रपानां च परन्तप । सरसांचैव भेत्तारो नरा निरयगामिनः ॥८॥

...पर्यस्यन्ति ये दाराञ्छिशून्भृत्यातिथींस्तथा । उत्सन्नपितृदेवेज्या नरानिरयगामिनः

...ज्या दूषका राजन्ये चैवाश्रमदूषकाः । सखीनां दूषकाश्चैव ते वै निरयगामिनः ॥

...यं पुरुषमीशानं सर्वलोक महेश्वरम् । न चिन्तयन्ति ये विष्णुं ते वै निरयगामिनः

प्रयाजानां मखानां च कन्यानां सुहृदां तथा ।
साधूनां च गुरूणां च दूषका निरयङ्गमाः ॥ १२ ॥

...ष्ठैर्वा शङ्कुभिर्वापि शूलैरश्मभिरेव वा । ये मार्गानुपरुन्धन्ति ते वै निरयगामिनः ॥

...र्वभूतेष्व विश्वस्ताःकामेनार्तास्तथैव च । सर्वभूतेषु जिह्माश्च ते वै निरयगामिनः



आगतान्भोजनार्थं तु ब्राह्मणान्वृत्तिकर्शितान् ।

प्रतिषेधं च कुर्वन्ति ते वै निरयगामिनः ॥ १९ ॥
क्षेत्रवृत्ति गृहच्छेदं प्रीतिच्छेदं च ये नराः । आशाच्छेदं प्रकुर्वन्ति ते वै निरय
शस्त्राणांचैव कर्त्तारःशल्यानां धनुषां तथा । विक्रेतारश्च राजेन्द्र नरा निरय
अनाथं विक्लवं दीनं रोगार्त्तं वृद्धमेव च । नानुकम्पन्ति ये मूढास्ते वै निरय
नियमान्पूर्वमादाय ये पश्चादजितेन्द्रियाः । अतिक्रामन्ति चाञ्चल्यात्ते वै निरय
इत्येते कथिता राजन्नरा निरयगामिनः ।
स्वर्गलोकस्य गन्तारो ये जनास्तान्निबोधमे ॥ २० ॥
सत्येन तपसाक्षान्त्या दानेनाध्ययनेन च । ये धर्मनुवर्तन्ते ते नराःस्वर्गगा
ये च होमपराध्यान देवतार्चनतत्पराः । आददाना महात्मानस्ते नराः स्वर्गगा
शुचयश्च शुचौदेशे वासुदेवपरायणाः । पठन्ति विष्णु गायन्ति ते नराःस्वर्ग
मातापित्रोश्च शुश्रूषां ये कुर्वन्ति सदादृताः ।
वर्जयन्ति दिवास्वप्नं ते नराःस्वर्गगामिनः ॥ २४ ॥
सर्वहिंसा निवृत्ताश्च साधुसङ्गाश्च ये नराः । सर्वस्यापिहितेयुक्तास्तेनराःस्वर्ग
सर्वलोभनिवृत्ताश्च सर्वसाहाश्च ये नराः । सर्वस्याश्रयभूताश्च ते नराःस्वर्ग
शुश्रूषाभिस्तपोभिश्च गुरुणां मानदा नराः । प्रतिग्रह निवृत्ता ये ते नराःस्वर्ग
सहस्रपरिवेष्टारस्तथैव च सहस्रदाः । त्रातारश्च सहस्राणां ते नराःस्वर्गगा
भयात्कामात्तथाऽऽक्रोशाद्दारिद्र्यात्पूर्वकर्मणः ।
न कुत्सन्ति च ये नूनं ते नराःस्वर्गगामिनः ॥ २६ ॥
आत्मस्वरूपवन्तश्च यौवनस्थाश्च भारतः । ये वै जितेन्द्रियाधीरास्ते नराःस्वर्ग
सुवर्णस्य च दातारो गवांभूमेश्च भारत । अन्नानां वाससांचैव ते नराःस्वर्ग
ये याचिताःप्रहृष्यन्ति प्रियं दत्त्वा वदन्ति च ।
त्यक्त दानफलेच्छाश्च ते नराःस्वर्गगामिनः ॥ ३२ ॥
निवेशनानां धान्यानां नराणां च परन्तप । स्वयमुत्पाद्य दातारःपुरुषाःस्वर्ग
द्विषतामपि ये दोषान्नवदन्ति कदाचन । कीर्तयन्ति गुणान्ये च ते नराःस्वर्ग

ये परेषांश्रियं दृष्ट्वा न चितप्यन्ति मत्सरात् ।
प्रहृष्टाश्चाभिनन्दन्ति ते नराःस्वर्गगामिनः ॥ ३५ ॥
…तौ च निवृत्तौ च श्रुतिशास्त्रोक्तमेव च । आचरन्ति महात्मानस्तेनराःस्वर्गगामिनः
ये नराणां वचोवक्तुं न जानन्ति च विप्रियम् ।
प्रियवाक्यैकविज्ञातास्ते नराःस्वर्गगामिनः ॥ ३७ ॥
…म भागान्कुर्वन्ति क्षुत्तृष्णाश्रमपीडिताः । हन्तकारस्यकर्तारस्ते नराःस्वर्गगामिनः
…कूपतडागानां प्रपानांचैव वेश्मनाम् । आरामाणां च कर्तारस्ते नराःस्वर्गगामिनः
…त्येष्वपि ये सत्याःऋजवोनार्जवेष्वपि । रिपुष्वपि हिताये च ते नराःस्वर्गगामिनः
यस्मिन्कस्मिन्कुलेजाता बहुपुत्राःशतायुषः ।
सानुक्रोशाःसदाचारास्ते नराःस्वर्गगामिनः ॥ ४१ ॥
…त्यवन्ध्यंदिवसं धर्मेणैकेन सर्वदा । व्रतं गृह्णन्ति ये नित्यं ते नराःस्वर्गगामिनः
आक्रोशन्तं स्तुवन्तं च तुल्यं पश्यन्ति ये नराः ।
शान्तात्मानो जितात्मानस्ते नराःस्वर्गगामिनः ॥ ४३ ॥
ये चापि भयसन्त्रस्तान्ब्राह्मणांश्च तथा स्त्रियः ।
सार्थान्वा परिरक्षन्ति ते नराःस्वर्गगामिनः ॥ ४४ ॥
…यां पुष्करेतीर्थे गयायां च विशेषतः । पितृपिण्डप्रदातारस्ते नराःस्वर्गगामिनः ॥
न वशेचेन्द्रियाणां च ये नराःसंयम स्थिताः ।
त्यक्तलोभभयक्रोधास्ते नराःस्वर्गगामिनः ॥ ४६ ॥
…मत्कुणदंशादीन्ये जन्तूं स्तुदतस्तनुम् । पुत्रवत्परिरक्षन्ति ते नराःस्वर्गगामिनः
…नाच्च यथोक्तेन विधिनासञ्जपन्ति च । सर्वद्वन्दसहालोके ते नराःस्वर्गगामिनः ॥
…ताःपरदारांश्च कर्मणा मनसा गिरा । रमयन्ति न सत्वस्थास्ते नराःस्वर्गगामिनः
निन्दितानि न कुर्वन्ति कुर्वन्ति विहितानि च ।
आत्मशक्तिं विजानन्ति ते नराःस्वर्गगामिनः ॥५०॥
…ते कथितं सर्वं मयातत्त्वेन पार्थिवः । दुर्गतिःसद्गतिश्चैव प्राप्यते कर्मभिर्यथा ॥

नरः परेषां प्रति कूलमाचरन्प्रयातिघोरं नरकं सुदारुणम् ।
सदानुकूलस्य नरस्य जीविनःसुखावहा मुक्तिरदूरसंस्थिता ॥५२॥
इतिश्रीपाद्मपुराणेद्वितीयेभूमिखण्डेवेनोपाख्यानेगुरुतीर्थमहात्म्येच्यवनचरि
षण्णवतितमोऽध्यायः ॥९६॥

---

## सप्तनवतितमोऽध्यायः

भार्ययासहसुबाहुनृपस्यतपःप्रभावेणविष्णुलोकंप्रतिगमनेऽपिविष्णोरद

कुञ्जलउवाच ।

एवमाकर्ण्य तां राजा मुनिनाभाषितां तदा । धर्माधर्मगतिं सर्वां तं मुनिं सम

सुबाहुरुवाच ।

सोऽहं धर्मं करिष्यामि सोऽहं पुण्यं द्विजोत्तम । वासुदेवं जगद्योनिं यजिष्ये
होमेन तु जपेनैव पूजयेन्मधुसूदनम् । यष्ट्वायज्ञं तपस्तप्त्वा विष्णुलोकं स
पूजितःसर्वकामैश्च प्राप्तवान्सत्वरं मुदा । गते तस्मिन्महालोके देवदेवं न प
क्षुधाजाता महातीव्रा तृष्णाचाति प्रवर्तते । तयोश्चापि महाप्राज्ञ जीवपीडा
राजापि प्रिययासार्द्धं क्षुधातृष्णाप्रपीडितः । न पश्यति हृषीकेशं दुःखेनमह

कुञ्जलउवाच ।

एवं सदुःखितो राजा प्रिययासह सत्तम । आकुलव्याकुलोजातःपीडितःक्षुध
इतश्चेतश्च वेगैश्च धावते वसुधाधिपः । सर्वाभरणशोभाङ्गो वस्त्रचन्दनभू
पुष्पमालाप्रशाभाङ्गो हारकुण्डलकङ्कणैः । रत्नदीप्तिप्रशोभाङ्गःप्रययौ स म
एवं दुःखसमाचारःस्तूयमानश्च पाठकैः । दुःखशोकसमाविष्टःस्वप्रियां वा
विष्णुलोकमहंप्राप्तस्त्वयासह सुशोभने । ऋषिभिःस्तूयमानोऽपि विमानेनापि
कर्मणा केन मे चैव क्षुधाऽतीव प्रवर्द्धते । विष्णुलोकं च सम्प्राप्य न दृष्टो

[कि]ं हि कारणं भद्रे न भुनज्मि महत्फलम् । कर्मणाथ निजेनापि एतद्दुःखं प्रवर्त्तते
सैवं श्रुत्वा च तद्वाक्यं राजानमिदमब्रवीत् ।
सत्यमुक्तं त्वया राजन्नास्ति धर्मस्य वै फलम् ॥ १४ ॥
[शा]स्त्रपुराणेषु ये पठन्ति च ब्राह्मणाः । दुःखशोकौ विधूयेह सर्वदोषैःप्रमुच्यते
नामोच्चारेण देवस्य विष्णोश्चैव सुचक्रिणः ।
पुण्यात्मानो महाभागा ध्यायमाना जनार्दनम् ॥ १६ ॥
[नै]वाराधितोदेवःशङ्खचक्रगदाधरः । अन्नादिदानं विप्रेभ्यो न प्रदत्तं द्विजोदितम् ॥
[..]ं तस्य प्रजानामि न दृष्टो मधुसूदनः । क्षुधामे बाधते राजंस्तृष्णाचैव प्रशोषयेत् ॥

कुञ्जल उवाच ।

[..]युक्तस्तु प्रियया राजाचिन्ता कुलेन्द्रियः । ततोदृष्ट्वा महापुण्यमाश्रमं श्रमनाशनम्
[..]न्यवृक्षसमाकीर्णं तडागैरूपशोभितम् । वापीकुण्डतडागैश्च पुण्यतोय प्रपूरितैः ॥
[..]कारण्डवाकीर्णं कह्लारैरुपशोभितम् । आश्रमःशोभते पुत्र मुनिभिस्तत्त्ववेदिभिः ॥
[..]न्यवृक्षसमाकीर्णं मृगवातैश्च शोभितम् । नानापुष्प समाकीर्णं हृद्यगन्ध समाकुलम्
द्विजसिद्धैः समाकीर्णमृषिशिष्यैः समाकुलम् ।
योगियोगेन्द्र सङ्घुष्टं देववृन्दैरलङ्कृतम् ॥ २३ ॥
[..]लीवनसम्बाधैःसुफलैःपरिशोभितम् । नानावृक्षसमाकीर्णं सर्वकामसमन्वितम् ॥
[..]षण्डैश्चारुगन्धैश्च सुफलैःशोभितं सदा । एवं पुण्यं समाकीर्णं ब्रह्मलक्ष्य समायुतम्
स सुबाहुस्ततो राजा तया सुप्रियग्रासह ।
प्रविवेश महापुण्यं तद्वनं सर्वकामदम् ॥ २६ ॥
[..]समानो दिशःसर्वा यत्रास्ते सूर्यसन्निभः । राजमानो महादीप्त्या परया सूर्यसन्निभः
[..]ासनसमारूढो योगपट्टेनसंवृतः । वामदेवं ऋषिश्रेष्ठो वैष्णवानां वरस्तथा ॥२८॥
[..]यमानो हृषीकेशं भुक्तिमुक्तिप्रदायकम् । वामदेवं महात्मानं तं दृष्ट्वा मुनिसत्तमम्
[..]ंगत्वा प्रणम्यैव सराजा प्रिययासह । वामदेवस्ततोदृष्ट्वा प्रणतं राजसत्तमम् ॥
[..]शीभिरभिनन्द्यैव राजानं प्रिययान्वितम् । उपवेश्यासने पुण्ये सुबाहुं राजसत्तमम्

आसनादि ततःपाद्यैरर्घपूजादिभिस्तथा । मुनिनापूजितो भूपःप्रिययासह चापर
अथ पप्रच्छ राजानं महाभागवतोत्तमम् ॥ ३३ ॥

वामदेव उवाच ।

त्वामहं विष्णुधर्मज्ञं विष्णुभक्तं नरोत्तमम् । जाने ज्ञानेन राजेन्द्र दिव्येन चोल
निरामयश्चागतोऽसि तार्क्ष्यया भार्ययासह ॥ ३५ ॥

राजोवाच ।

निरामयश्चागतोऽस्मि प्राप्तो विष्णोःपरंपदम् । मया हि परयाभक्त्या देवदेवो
आराधितो जगन्नाथो भक्तिप्रीतःसुरेश्वरम् । कस्मात्पश्याम्यहं तात नदेवं काम
क्षुधा मे बाधते तात तृष्णातीवसुदारुणा ।
ताभ्यां शान्ति न गच्छाव सुखं विन्दावनैव च ॥ ३८ ॥
एतन्मे कारणं दुःखं सञ्जातं मुनिसत्तम । तन्मे त्वं कारणंब्रूहि प्रसादात्सुमु

वामदेव उवाच ।

त्वं तु भक्तोऽसि राजेन्द्र श्रीकृष्णस्य सदैव हि ।
आराधितस्त्वया भक्त्या परया मधुसूदनः ॥ ४० ॥
भक्त्योपचारैःस्नानाद्यैर्गन्धपुष्पादिभिस्तथा । न पूजितोऽथ नैवेद्यैःफलैश्च
दशमीं प्राप्य राजेन्द्र त्वयैव च सदाकृतम् । एकभक्तं न दत्तं तु ब्राह्मणाय सु
एकादशीं तु सम्प्राप्य न कृतंभोजनं त्वया । विष्णुमुद्दिश्य विप्राय न दत्तं भोज
अन्नं चामृतरूपेण पृथिव्यां संस्थितं सदा ।
अन्नदानं विशेषेण कदादत्तं न हि त्वया ॥ ४४ ॥
ओषध्यश्च महाराज नानाभेदास्तु ताःश्रृणु । कटुतिक्तकषायाश्च मधुराम्लाश्च
हिङ्वाद्योपस्कराः सर्वे नानारूपाश्च भूपते । अमृताज्जज्ञिरे सर्वा ओषध्यः
अन्नमेव सुसंस्कृत्य ओषधव्यञ्जनान्वितम् । देवेभ्यो विष्णुरूपेभ्य इतिसङ्क
पितृभ्यो विष्णुरूपेभ्यो हस्ते च ब्राह्मणस्य हि ।

अतिथिभ्यस्ततो दत्त्वा परिजनं प्रभोजयेत् ॥ ४८ ॥

